THE

PRINCESS OF WALES

SARASWATI BHAVANA TEXTS

No. 54.

—o—

EDITED BY

Mahāmahopādhyāya

GOPĪ NATHA KAVIRĀJA, M. A.

---

THE

# NṚISIMHA PRASĀDA

( PRĀYAS'CITTASĀRA )



*Printed by Jai Krishna Das Gupta*

*Vidya Vilas Press, Benares City.*

---

1934

THE

# NRISIMHA PRASĀDA

of

MAHĀRĀJA DALAPATI

## PRĀYAS'CITTA SĀRA



*Edited by*

SĀHITYĀCHĀRYA VEDĀNTA BHŪṢAṆA, KATHĀBHAṬṬA

*Paṇḍit Nanda Kishore S'armā*

Adhyāpaka Sanskrit College, Jaipur, Member of the Pandit Assembly of Mojamandir, Jaipur, Member of the Faculty of the Benares Hindu University, Research Scholar, Govt. Sanskrit Library, Benares.

AND

SĀHITYĀCHĀRYA, SĀHITYA BHŪṢAṆA, KATHĀBHAṬṬA

PANDIT NANDA KUMĀRA S'ARMĀ

Head Pandit, Maharaja's High School, Jaipur.

श्रीदलपतिमहाराजविरचितो

# नृसिंहप्रसादः

## (प्रायश्चित्तसारः।)

जयपुरमहाराजमौजमन्दिरस्थपण्डितसभासभ्येन राजगुरुकथाभट्ट-
वंश्येन वेदान्तभूषणोपाधिविभूषितेन काशिकगवर्नमैण्टसंस्कृ-
तपुस्तकालयीयप्रत्नतत्त्वान्वेषणपरायणेन वाराणसेयहिन्दू-
विश्वविद्यालयीयपाठ्यनिर्धारकसमितिसदस्येन
जयपुरराजकीयसंस्कृतपाठशालाध्यापकेन

**कथाभट्ट श्रीनन्दकिशोरशर्मणा साहित्याचार्येण,**

जयपुरराजगुरुकथाभट्टवंश्येन साहित्यभूषणोपाधिविभूषितेन, संयुक्तप्रान्त-
राजकीयहिन्दीविशेषयोग्यतापरीक्षोत्तीर्णेन, महाराजास्-
हाईस्कूलाख्याङ्गलविद्यालयप्रधानपण्डितेन

**कथाभट्ट श्रीनन्दकुमारशर्मणा साहित्याचार्येण च**

# प्रारम्भिकवक्तव्यम् ।

अथ श्रीदलपतिमहाराजविनिर्मितस्य धर्मशास्त्रीयनिबन्धग्रन्थस्य नृसिंहप्रसादाख्यस्य प्रायश्चित्तसाराभिधेयः षष्ठो विभागो विदुषां करकमलेषूपानीयते । सूत्रग्रन्थाः, स्मृतयः ( पुराणसहिताः ), सूत्रस्मृतिटीकाग्रन्थाः, प्रकीर्णग्रन्थाश्चेति पञ्चधा धर्मशास्त्रग्रन्थानां विभागः प्राचीनैर्विहितो वर्तत इति तद्रीत्या नृसिंहप्रसादाख्योऽयं ग्रन्थश्चतुर्थकोटौ ( निबन्धकोटौ ) संनिविशते ।

(१)तथा हीमे धर्मशास्त्रे सूत्रग्रन्थाः सूत्रकाराश्च—गौतमधर्मसूत्रम्, बौधायनधर्मसूत्रम् , आपस्तम्बधर्मसूत्रम् , हिरण्यकेशिधर्मसूत्रम् , वसिष्ठधर्मसूत्रम् , विष्णुधर्मसूत्रम् , हारीतधर्मसूत्रम् , शङ्खलिखितधर्मसूत्रम् , मानवधर्मसूत्रम् , कौटिलीयार्थशास्त्रम् , वैखानसधर्मसूत्रम् , अत्रिः ( आत्रेयसंहिताकारः ), उशनाः ( शुक्रनीतिकारः ), कण्वः काण्वो वा ( स्मृतिचन्द्रिकोल्लिखितः ), कश्यपः काश्यपो वा ( बौधायनधर्मशास्त्रे निर्दिष्टः ), गार्ग्यः ( बृहद्गार्ग्यः ), च्यवनः, जातूकर्ण्यः, ( मिताक्षरोल्लिखितः ), देवलः ( धर्मसूत्रकारः ), पैठीनसिः, बुद्धः ( हेमाद्रिणा निर्दिष्टः ), बृहस्पतिः ( अर्थशास्त्रकर्ता ), भरद्वाजो भारद्वाजो वा ( श्रौतगृह्यसूत्रयोः कर्ता ), शातातपः ( एतत्सूत्रे प्रायश्चित्तं श्राद्धमाचारश्च । अयमेव च वृद्धः शातातप उच्यते ), सुमन्तुः ( एतत्कृतसूत्रे आचारप्रायश्चित्तयोर्वर्णनम् ) ।

स्मृतिग्रन्थाः स्मृतिकाराश्चैते—मनुस्मृतिः, (१)पुराणानि, उपपुराणानि(२), याज्ञवल्क्यस्मृतिः, पराशरस्मृतिः, नारदस्मृतिः ( अत्र व्यवहारमात्रालोचनम् ), बृहस्पतिः, कात्यायनः, अङ्गिराः, ऋष्यशृङ्गः, कार्ष्णाजिनिः, चतुर्विंशतिमतम् , दक्षः, पितामहः, पुलस्त्यः, प्रचेताः, प्रजापतिः, मरीचिः, यमः, लौगाक्षिः, विश्वामित्रः, व्यासः, षट्त्रिंशन्मतम् , संग्रहः स्मृतिसंग्रहो वा, संवर्त्तः, हारीतश्चेति ।

सूत्रस्मृतिटीकाकारा एते—असहायः ( नारदस्मृतिटीकाकारः ), भर्तृयज्ञः ( मेधातिथिनोल्लिखितः ८०० ई० ), विश्वरूपः ( याज्ञवल्क्यस्मृतिटीकाबालक्रीडाकर्ता ५५०-१००० ई० ), भारुचिः ( मिताक्षरोल्लिखितः ), श्रीकरः ( ८००-१०५० ई० ), मेधातिथिः ( मनुस्मृतिटीकाकारः ८२५-६०० ई० ), धारेश्वरो भोजदेवः (मिताक्षरोल्लिखितः), देवस्वामी ( स्मृतिसमुच्चयकर्ता १०००-१०५० ई० ), जितेन्द्रियः (जीमूतवाहनेन निर्दिष्टः ), बालकः ( जीमूतवाहनशूलपाणिरघुनन्दनैर्निर्दिष्टः ११०० ई० ), बालरूपः ( स्मृतिसारविवादचन्द्रविवादचिन्तामणिग्रन्थोल्लिखितः १२५० ई० ), योगलोकः ( ६५०-१०५० ई० ), विज्ञानेश्वरः ( मिताक्षराकर्ता १०७०-११०० ई० ), कामधेनुः ( कल्पतरूल्लिखितः-१०००-११०० ई० ), हलायुधः ( ब्राह्मणसर्वस्वकर्ता—

---

( १ ) ब्रह्मपुराणम् , पद्मपुराणम् , विष्णुपुराणम् वायुपुराणम् , श्रीमद्भागवतम् , नारदपुराणम् ( बृहन्नारदीयम् ), मार्कण्डेयपुराणम् , अग्निपुराणम् , भविष्यपुराणम् , ब्रह्मवैवर्त्तपुराणम् , लिङ्गपुराणम् , वराहपुराणम् , स्कन्दपुराणम् , वामनपुराणाम् , कूर्मपुराणम् , मत्स्यपुराणम् , गरुडपुराणम् , ब्रह्माण्डपुराणं चेत्यष्टादश पुराणानि ।

( २ ) सनत्कुमारम् , नृसिंहपुराणम् , नारदीयम् , शिवपुराणम् , दौर्वासरम् , कापिलम् , मानवम् , औशनसम् , वारुणम् , कालिकापुराणम् , साम्बपुराणम् ,

१०००-११०० ई० ), भवदेवभट्टः ( व्यवहारतिलकादिकर्ता १०५०-११०० ई० ); प्रकाशः ( महार्णवप्रकाशकर्ताः १०००-११०० ई० ), पारिजातः ( कल्पतरूल्लिखितः १०००-११२५ ई० ), गोविन्दराजः ( स्मृतिमञ्जरीनामकमनुस्मृतिटीकाकारः-१०५०-११४० ई० ) ।

धर्मशास्त्रे निबन्धा निबन्धकाराश्चैते—लक्ष्मीधरस्य कल्पतरुः ( ११००-११५० ई० ), अपरार्कः ( याज्ञवल्क्यस्मृतिटीकाकारः, उत्कलदेशाधिपः ११२५ ई० ), प्रदीपः ( ११००-११५० ई० ), श्रीधरस्य स्मृत्यर्थसारः ( ११५०-१२०० ई० ), अनिरुद्धः ( हारलतापितृदयिताकर्ता-११७५ ई० ), बल्लालसेनः ( आचार-अद्भुत-दानप्रतिष्ठासागरादिकर्ता-१०६१ शाके ), हरिहरः ( व्यवहारलेखकः १३०० ई० ) देवणभट्टस्य स्मृतिचन्द्रिका ( ११५०—१२२५ ई० ), हरदत्तः ( अनाकुलाख्य—आपस्तम्बधर्मसूत्रभाष्यकर्ता ), हेमाद्रेश्चतुर्वर्गचिन्तामणिः ( १२७० ई० ); कुल्लूकभट्टः ( मन्वर्थमुक्तावल्याख्यमनुस्मृतिटीकाकर्ता ११५०-१३०० ई० ), श्रीदत्त उपाध्यायः (१२७५—१३०० ई०), चण्डेश्वरस्य स्मृतिरत्नाकरः (१३१४—१३७० ई०), हरिनाथस्य स्मृतिसारः ( १३५० ई० ), माधवाचार्यः ( पराशरमाधवकालनिर्णयादिकर्ता—१३३०-१३८५ ई० ), मदनपालो विश्वेश्वरभट्टश्च ( मदनपारिजातो विश्वेश्वरभट्टेन कृतः, मदनपालसमयः १३००-१४०० ई, विश्वेश्वरसमयश्च १३७५ ई० ), मदनरत्नम् ( अत्र समय-व्यवहार-प्रायश्चित्त-दान-शुद्धि-शान्तिसमोद्योताः । मदनसिंहदेवाश्रयेण ग्रन्थोऽयं रत्नाकर-गोपीनाथ-विश्वनाथ-गङ्गाधरपण्डितैर्विरचितः १४२५-१४५० ई० ), शूलपाणिः ( स्मृतिविवेककारः, अत्र दुर्गोत्सव-श्राद्ध-प्रायश्चित्त-शुद्धि-प्रकरणानि । १३७५-१४६० ई०), रुद्रधरः ( श्राद्धविवेक-शुद्धिविवेक-व्रतपद्धति-वर्षकृत्यकर्ता १४२५-१४६० ई० ), मिसरुमिश्रस्य विवाद-

दलपतेर्नृसिंहप्रसादः (१४९०-१५१० ई०), प्रतापरुद्रदेवस्य सरस्वतीविलासः ( अयं ग्रन्थकार उत्कलाधिपगजपतिराजवंश्यः १४९७-१५३९ ई० ), गोविन्दानन्दः ( दान-शुद्धि-श्राद्ध-वर्षक्रियाकौमुदीनां निर्माता, शूलपाणिप्रायश्चित्तविवेकटीका-श्रीनिवासीयशुद्धिदीपिकाटीकार्थकौमुदीकर्ता च १५००-१५४० ई० ), रघुनन्दनभट्टाचार्यस्य स्मृतितत्त्वम् ( १५००-१५७५ ), टोडरानन्दः ( अत्र-आचार-दान-व्यवहारश्राद्ध-प्रायश्चित्त-समय-ज्योतिः-सौख्यानि । १५८९ ई० वर्षे टोडरमलमृत्युः ), नन्दपण्डितो धर्माधिकारी(दत्तकमीमांसाविष्णुस्मृतिटीकावैजयन्तीकारः १६२३ ई०) निर्णयसिन्धुः कमलाकरभट्टस्य (१६१०-१६५० ई० ), (१)कालतत्त्वविवेचनं रघुनाथभट्टस्य ( १६२० ई० ), नीलकण्ठभट्टस्य भगवन्तभास्करः ( अत्र द्वादशमयूखाः । १६१०-१६५० ई० ), मित्रमिश्रस्य वीरमित्रोदयः ( परिभाषा-संस्कार-आह्निक-पूजा-प्रतिष्ठा-राजधर्म-व्यवहार-शुद्धि-श्राद्ध-तीर्थ-दान-व्रत-समय-ज्यौतिष-शान्ति-कर्मविपाक-चिकित्सा-प्रायश्चित्त-प्रकीर्णक-लक्षण-भक्ति-मोक्षप्रकाशाख्यानि द्वाविंशतिप्रकरणानि १६२७ ई० ); अनन्तदेवस्य स्मृतिकौस्तुभः ( अत्र संस्कार-आचार-राजधर्म-दान-उत्सर्ग-प्रतिष्ठा-तिथि-संवत्सरप्रकरणानि १६४५-१६९५ ई०), नागोजीभट्टः (बिसेनवंशीयमहाराजाश्रितः । १७००-१७५० ई० ); पुण्डरीकरत्नाकरस्य जयसिंहकल्पद्रुमः (जयपुराधीशसवाईजयसिंहनिर्देशेन कृतः १७७० वि० वर्षे ); अनन्तभट्टस्य विधानपारिजातः (अत्र पञ्चस्तबकाः १७२० ई० ), प्रतापार्को विश्वनाथमहाशब्देकृतः ( जयपुराधीशप्रतापसिंहदेवनिदेशेन कृतः । १८५० वि० सं० ), बालकृष्णो बालम्भट्टो वा ( याज्ञवल्क्यस्मृतिव्याख्यामिताक्षरातट्टीकालक्ष्मीकर्ता १७३०-१८२० ई० ), काशीनाथोपाध्यायस्य धर्मसिन्धुः (१७९० ई०),

---

(१) एतद्भागत्रयेषु भागद्वयं लेखकेन सम्पाद्य काशिकराजकीयपुस्तकाल-

जगन्नाथतर्कपञ्चाननः ( विवादभङ्गार्णवकर्ता । अस्याङ्ग्लभाषानुवादो बृटिशराजाज्ञया १७९६ ई० वर्षे कोलब्रुकमहोदयेन कृतः ), शैवसुधाकरः ( सदानन्दस्वामिना जयपुराधीशरामसिंहदेवकृते निर्मितः ), धर्मचन्द्रोदयः (जयपुराधीशरामसिंहदेवेन कारितः) इति । धर्मशास्त्रे प्रकीर्णग्रन्थास्तु बहव इति तेषां नामान्यत्र गौरवभियोपेक्षितानि ।

---

## दलपतिमहाराजः ।

अयं द्विजराजकुलालङ्कारहीरो भारद्वाजसगोत्रो वल्लभात्मजो याज्ञवल्क्यीयलुप्तशाखाशुक्लयजुर्वेदप्रवर्तकः परमवैष्णवो वैष्णवधर्मप्रचारकश्चासीत् । कस्यचित् वल्लभपण्डितस्य प्रसादेनानेन सूर्यनामधेयो गुरुरप्यासादितः(१) । असावेव दलपतिमहाराजगुरुः सूर्यपण्डितो महाराष्ट्रदेशप्रसिद्धस्यै .नाथस्वामिनः पिता सम्भाव्यते । एकनाथस्वमिना वैष्णवधर्मप्रवर्तकेन काश्यां १४९५ शाकवत्सरे (१५७३ ई०) श्रीमद्भागवतव्याख्या निरमायि सा चाधुना मुद्रितापि । अस्तु । गढामण्डलाख्य ( जबलपुरप्रान्तीय ) प्रदेशाधिपः सुप्रसिद्धवीरक्षत्रियाया महाराज्ञ्या दुर्गावत्याः (२)पतिर्गौडवंशीयो दलपतिमहाराजस्तु क्षत्रियवंशोद्भवत्वाद् भिद्यते द्विजकुलालङ्कारादस्मादिति तु सुविदितमेव प्रेक्षावताम् ।

असौ दलपतिमहाराजो देवगिरि ( ( दौलताबाद ) पुरिवराधीश्वरश्रीनिजामशाहस्य प्रधानमन्त्री प्रतिनिधीभूतः समस्तकरणाधीश्वर ( सुपरिन्टेन्डेट् आफ सेक्रेटेरियेट् आफिस ) श्चासीत् ।

---

( १ ) ग्रन्थान्तलिखितपुष्पिकातोऽवगम्यते । सा च २३५–२३६ पृष्ठयोर्द्रष्टव्या ।

( २ ) स्वर्गीयभट्टबदरीनाथनिर्मितं "रानी दुर्गावती"नामकं हिन्दीनाटकं लक्ष्म-

महाराज इत्यस्योपाधिर्बभूव । यथोक्तं ग्रन्थे—

"प्रौढश्रीद्विजराजतुङ्गतिलकालङ्कारहीरप्रभुः-
भारद्वाजकुलानुगः प्रथमया यः शाखयालङ्कृतः ।
श्रीमन्नैवजने समस्तकरणाधीशः सतामग्रणीः
श्रीमद्वल्लभभूश्चिरं विजयते श्रीमान् दलाधीश्वरः ॥
निजामशाहसाम्राज्यधुरन्धरमहीपतिः ।
श्रीनृसिंहप्रसादं हि तनुते धर्मसंविदे" ॥ इति ।

( संस्कारसारप्रारम्भे ) ।

श्रीनृसिंहावतारस्य परमभक्तेनानेन नृसिंहस्य प्रसादो नृसिंहप्रसाद इति नृसिंहानुग्रहरूपैव स्वीयग्रन्थाभिख्यापि प्रख्यापिता ॥ तथा चास्य नृसिंहावतारविषयिणी रतिर्निम्नपद्येषु दर्शनार्हा—

"व्यग्रं सिंहवदुत्तमाङ्गमुररीकुर्वन्नपि स्थेयसः
कारुण्यादभयप्रदाननिपुणैरालोकनानां क्रमैः ।
आल्हादं निजपादपङ्कजजुषां यः कल्पयत्यन्वहं
प्रल्हादप्रणयी स नो वितनुताद् भद्रं परः पुरुषः ॥
यो लोकस्य गुरुर्विशारदजना यं भावयन्ते गुरुं
येनैतद्गुरुणोदहारि गुरवे तस्मै नमः सर्वदा ।
यस्माद्वेदपथः स्थिरोऽजनि जने यस्य प्रसादाद्रति-
र्यस्मिन्सर्वगुणा गुरौ हृदि सदा तं त्वां नृसिंहं भजे ॥
अनन्तदेवेशकिरीटकोटिरत्नत्विषा रञ्जितपादपीठम् ।
कारुण्यनेत्रं कमलाकलत्रं लक्ष्मीनृसिंहं हृदि भावयामि"।इति।

असौ दलपतिमहाराजो दाक्षिणात्य इति निम्नलिखितैर्हेतुभिरनुमीयत इति इति काणे महाशयो वदति(१) । तथा हि–संस्का-

रसारे मातुलसुतापरिणायनं न दोष इति प्रतिपादितम् । यथा-“वस्तुतस्तु मातुलसुतापरिणायनं वेदाभिहिततया न दोष इति विस्तरेण वक्ष्याम इति । तीर्थसारे च दक्षिणदेशस्थानां सेतुबन्धपुण्डरीक-(पण्ढ पुरं शोलापुरान्तर्गतम् ) गया-गोदावरी-कृष्णा-वेणी-नर्मदा-मलापहारिणीप्रभृतीनां बहूनां तीर्थानां विवरणं ग्रन्थे लिखितम् ।

यथा-“भैम्याश्चैव तटे देवी दक्षिणे तीर्थमुत्तमम् ।
धर्मरीरा नदी यत्र करवीरकुशाङ्कुशैः ॥
शोभिता सङ्गता भैम्यास्तस्माद्योजनमन्ततः ।
पौण्डरीकमिति ख्यातं तत्तीर्थं तीर्थपूजितम् ॥
पाण्डुरङ्गस्तत्रास्ते…………” इत्यादि ।

---

# ग्रन्थकारसंरक्षको

## निजामशाहः ।

( १४९०—१५०८ई० )

यस्मिन्समये देवगिरौ रामाख्योऽधिप (१)आसीत्तस्मिन्नेवानेहसीन्द्रप्रस्थपुरे  दिल्लीनगर्याम् ) शामवित् ? सम्राडासीत् । एतयोरनन्तरं निजामशाहो देवगिरि ( दौलताबाद ) शासको बभूवेति नृसिंहप्रसादीयसंस्कारसारश्लोकतो विज्ञायते । यथा—

“श्रीमद्देवगिरौ पुरन्दरपुरस्पर्धाधिबद्धादरे
रामे राजनि शामवित् ? किल बभौ राजा स दिल्लीश्वरः ।

दिल्लीशादुपरि क्षितौ समभवन्नैजामशाहो महान्
यद्दोर्दण्डनिजप्रतापमहिमा राज्यं वशेचानयत्" ॥ इति ।

नवाबनिजामशाहस्य स्तुतिपराणि पद्यानि निम्ननिर्दिष्टानि ग्रन्थे समुपलभ्यन्ते—

"श्रीमद्राजशिरोमणिं क्षितितलक्षत्रेभपञ्चाननं
यं चानन्तगुणं गृणन्ति सुनये प्रौढप्रतापं भुवि ।
सौन्दर्यैकनिधिं विवेकजलधिं दातृत्वभूमिं परं
श्रीनैवक्षितिपालसूनुमिह तं नैजामशाहं नुमः ॥ १० ॥
भूमण्डलाखण्डल एकराजः श्रीमण्डलोकावनिपालपालः ।
निजामशाहः स्वभुजार्जितारिश्रीराज्यभारो जयति प्रवीरः॥११॥
इलामसौ भासयतु प्रतापैर्निजामशाहो गगनं दिनेशः ।
इतीव सीम्नो नियमाय दत्तमाधत्त चैकं विधिनातपत्रम् ॥१२॥
भास्वत्यर्णवचन्द्रमण्डलकरोल्लासप्रसङ्गोल्लसत्—
क्षीराम्भोनिधिमूर्च्छदच्छलहरीसौन्दर्यसर्वङ्कषा ।
कीर्तिः कल्पकवीन्द्रकेसरिकुलक्रीडाकुलाद्रिस्थली
जागर्ति प्रतिभूपसिन्धुरहरेर्नैजामशाहस्य वै" ॥ १३ ॥ इति ।

अथ कोऽसौ निजामशाहः कस्मिन्काले कुत्र बभूव किं प्रचक्रामेति सविस्तारमतिहासिकवृत्तमत्रालोच्यते ।

दक्षिणस्यां दिशि निजामशाहीराजवंशप्रतिष्ठापको बहमनीतिसमाख्ययवनराज्यवंशराजमन्त्रिणो बेहरीत्युपाख्यस्य निजामउल्मुल्कस्य ज्येष्ठपुत्रो विजयनगरस्थबहमनीराजवंशाङ्कुरोऽहमदशाहनामा निजामशाहो बभूव । निजामशाह इत्यानुवंशिकी बभूवास्योपाख्या । स्वपितरि दिवं गतेऽनेन बहमनीराजवंशस्याश्रयं परित्यज्य स्वयमेवाहमदनगरे १४९० ई० वर्षे राज्ञा बभूवे, देवगिरि (दौलताबाद) दुर्ग-

नवीनराज्यप्रतिष्ठापकश्चेति कृत्वा निजामशाह इत्येवाहमदशाहस्याऽस्याख्या लोके प्रचलिता । १५०८ ई० वर्षे चायं स्वर्गसुखमन्वभवत् ।

बृहति दाक्षिणात्ये बहमनीसमाख्ययवनसाम्राज्ये क्षयं याते तद्राज्यं पञ्चधा विभज्य(१) आदिलशाही-कुतुबशाही-निजामशाही-इमादशाहीबरीदशाही—इति पञ्चभिर्यवनराजकुलैः पृथक् २ स्वायत्तीकृतम् । तत्र आदिलशाहीराज्यं बीजापुरे, कुतुबशाहीराज्यं गोलकुण्डादेशे, निजामशाहीराज्यमहमदनगरे, इमादशाहीराज्यं बरारप्रदेशे, बरीदशाहीराज्यं बिदर ( गुलबरगा ) देशे च बभूव ।

निजामशाहीराज्यवंशप्रमुखेण १४९४ ई० वर्षे अहमदशाहनाम्ना यवनराजेन स्वनाम्नाहमदनगराख्या राजधानी स्थापिता, कोङ्कण—देवगिरि ( दौलताबाद ) खानदेशनासिकाख्याश्च राजविभागा विहिताः(२) । १५७२ ई० वर्षे इमादशाहीराज्यं विदर्भनगर ( बरारदेश )-मपि निजामराज्येऽहमदनगरेऽन्तर्गतं बभूव । अहमदनगरस्य प्राचीना "बागान" इत्याख्यासीत् । अस्मिन्नेव स्थानेऽहमदशाहेन बहमनी-राजवंशसैन्यं विजित्य राजकार्यं स्वाधीनीकृत्य श्वेतच्छत्रं च धृतम्(३) । तथात्रत्योच्चाधिकारिभ्यो हिन्दूभ्यो राजेत्युपाधयो वितीर्णाः ।

---

( १ ) बम्बई गजेटियर, वाल्यूम १ पृष्ठ ६२२ । गवर्नमैण्ट ओरियण्टल प्रेस बम्बई १८९६ ई० ।

( २ ) निजामशाहराज्यान्तर्वर्तिन्यां माहिष्मत्यां प्रेमनिधिठक्कुरनिवासो बभूव । अनेन धर्माधर्मप्रबोधिनो १४१० शाकवर्षे (१९४९ ई०) मिथिलायां निर्मिता । अत्र-आह्निक-पुजा-श्राद्ध-आशौच-शुद्धि विवाह-आपद्धर्म-प्रायश्चित्त-कर्म-विपाकाख्यानि प्रकरणानि । (हिस्ट्री आफ धर्मशास्त्र By पी० वी० काणे ३७० पृष्ठे) ।

( ३ ) ग्रन्थकारेणापि निजामशाहस्य छत्रवर्णनमिदं विहितम्—

"इलामसौ भासयतु प्रतापैर्निजामशाहो गगनं दिनेशः ।
इतीय सीम्नो नियमाय दत्तमाधत्त चैकं विधिनातपत्रम् ” ॥ इति ।

( संस्कारसारप्रारम्भे १२ ) ।

साम्प्रतमहमदनगरमोडरराज्यान्तर्गतं देवगिरिश्च हैदराबादराज्यान्तर्गतमिति विज्ञेयम् ।

---

## निजामशाहीराजवंशपरम्परासौ—

१—निजामउल्मुल्कः ( बहमनीराजवंशमन्त्री ) ।

२—अहमदशाहो निजामशाहो वा ( निजामशाहीराज्यप्रतिष्ठापकः १४६०—१५०८ ई० ) ।

३—बुरहाननिजामः ( १५०८—१५५३ ) ।

४—हुशेननिजामः ( १५५३—१५६५ ) ।

५—सलाँबतखाँ ( १५६५—१५८९ ) ।

६—बुरहाननिजामः—( द्वितीयः )—( १५८९—१५०.४ ) अयं मुगलवंशाधीनो बभूव(१) ।

बुरहाननिजामकाले मुगलवंशीयाकबराख्येन सम्राजा निजामराज्यं स्वाधिकारे कृतम् । ततश्च कियत्कालानन्तरमौरङ्गजेबाख्येन सम्राजाऽऽसफखांनामा तद्वंशीयः कश्चित्तद्राजकर्मचारी निजामउल्मुल्क इति पद्व्या विभूष्य तत्र प्रान्तीयाधिकारी ( सूबेदार ) चक्रे । असौ प्रान्तीयाधिकारी आसफखांनामा दिवं गते औरङ्गजेबाख्ये सम्राजि स्वयं स्वाधिकारी राजा तत्प्रदेशस्य बभूव । हैदराबादाख्ये च नगरे स्वराजधानी विहितासफखांनिजामेन । १७४८ ई० वर्षे चायं स्वर्गाधिकारी जातः । हैदराबादस्य वर्त्तमानाः शासकाः श्रीमन्तो निजाम उल्मुल्क नवाब मीर सर उस्मानअलीखां बहादुर फतहगञ्ज जी० सी० एस० आई०, जी० बी० आई०, निजाममहोदया उक्तपूर्वासफखां निजामवंशीया एव । अस्तु । प्रकृतमनुसरामः । एवं निजामशाह (अहमदशाह) समये (१४९०-१५०८ई०)

---

( १ ) हिन्दीविश्वकोशीयनिजामशाहपदविवरणे ।

निर्धारिते तत्समाश्रितस्य ग्रन्थकर्तुर्दलपतिमहाराजस्य समयोऽपि समसामयिकत्वादेष एवासंशयं प्रत्येयः ।

---

## ग्रन्थकाराणां राजाश्रयः ।

प्राचीनकाले राजानो महाराजाश्च धार्मिकसाहित्यिकादिग्रन्थकारेभ्यराश्रयं संमानं राज्याधिकारं च ददुः । यथा ब्राह्मणसर्वस्वकर्ता हलायुधः, चतुर्वर्गचिन्तामणिकारो हेमाद्रिः, वेदभाष्यकारो माधवाचार्यः, टोडरानन्दकर्ता, वीरमित्रोदयनिर्माता मित्रमिश्रः, भगवन्तभास्करकर्ता नीलकण्ठभट्टः, जयसिंहकल्पद्रुमकर्ता रत्नाकरपुण्डरीकः, इत्याद्यनेके ग्रन्थकाराः स्वयं राजकर्मचारिणो बभूवुः । किं बहुना नृसिंहप्रसादकर्ता दलपतिः, परशुरामप्रतापाख्य(१)धर्मशास्त्रग्रन्थकर्ता साबाजीमहोदयश्च यवनराजनिजामशाहसमाश्रयेण धर्मशास्त्रीयनिबन्धानरचयत् । अहो प्रशंसनीया यवनमहाराजानामुदारता ।

---

## नृसिंहप्रसादः ।

दलपतिमहाराजेन निर्मितोऽयं नृसिंहप्रसादाख्यो ग्रन्थो न कुत्राप्यद्यावधि मुद्रितः । ग्रन्थकारेण नृसिंहभक्तिप्रवणेन नृसिंहस्य प्रसादो नृसिंहप्रसाद इति नृसिंहनामसम्बन्धिन्येव स्वीयग्रन्थाभिख्या प्रकल्पिता । प्रयोगपरिजातादिग्रन्थेभ्यश्चास्य वैशिष्ट्यं प्रतिपादितम् । यथोक्तं संस्कारसारे—

"प्रयोगपरिजातादिनिबन्धाः सन्ति यद्यपि ।
शास्त्रज्ञस्तत्र चात्रापि मृग्येत्प्रत्यक्षमन्तरम्" ॥ १६ ॥ इति ।

---

(१) अस्मिन् ग्रन्थे—आह्निक—जातिविवेक—दान—प्रायश्चित्त—संस्कार—राजनीति—श्राद्ध—प्रकरणानि । ( डेक्कनकालेजपूनासंग्रहे २वाल्यूम २४३—२४६संख्याङ्क)।

ग्रन्थस्यास्य द्वादशभागा सारनाम्ना विहिताः । ते च द्वादशसारा एते—

"संस्कारसारः प्रथमो द्वितीयस्त्वाह्निकाभिधः ।
श्राद्धसारस्तृतीयस्तु चतुर्थः कालनिर्णयः ॥
पञ्चमो व्यवहाराख्यः प्रायश्चित्ताभिधस्तथा ।
षष्ठः कर्मविपाकाख्यः सप्तमस्त्वघनाशकः ॥
अष्टमो व्रतसाराख्यः पुराणोक्ताभिधायकः ।
नवमो दानसाराख्यः सर्ववर्णाधिकारकः ॥
दशमः शान्तिसंज्ञो वै तैर्थं एकादश स्मृतः ।
देवप्रतिष्ठासारश्च द्वादश प्रकीर्तितः" ॥

( १७-२० संस्कारसारश्लोकाः ) एते द्वादशसाराः काशिकराजकीय संस्कृतपुस्तकालये सरस्वतीभवनाख्ये विद्यन्ते । तेषामिदं विवरणम्—

१—संस्कारसारः ( ७७ पत्राणि ) ।
२—आह्निकसारः ( ५० पत्राणि ) ।
३—श्राद्धसारः(१) ( ३१ पत्राणि ) ।
४—कालसारः ( ४४ पत्राणि ) खण्डितोऽयम् ।
५—व्यवहारसारः(२) ( ४५ पत्राणि ) ।
६—प्रायश्चित्तसारः ( ४४ पत्राणि ) ।
७—कर्मविपाकसारः ( ३८ पत्राणि ) ।
८—व्रतसारः ( ११८ पत्राणि ) खण्डितोऽयम् ।

---

( १ ) वाराणसेयहिन्दूविश्वविद्यालयीयधर्मविज्ञानविभागाध्यक्षश्रद्धेयश्रीविद्याधरमहोदयानां सम्पादकत्वेऽयं मुद्रापयितुमुपक्रान्तः ।

( २ ) व्याकरणाचार्यविनायकशास्त्रिटिल्लूमहोदयसम्पादकत्वे मुद्रापयितुमुपक्रान्तोऽयम् ।

९—दानसारः ( ६९ पत्राणि ) ।

१०—शान्तिसारः ( ४३ पत्राणि । खण्डितोऽयम् ) ।

११—तीर्थसारः ( १६ पत्राणि ) ।

१२—प्रतिष्ठासारः ( ४२ पत्राणि ) खण्डितोऽयम् ।

एतेषु संस्कारसारे श्रुतिस्मृतिपुराणादिसंमतधर्मपदार्थविवेचनम् । तथा कलिवर्ज्य-पुण्याहवाचन-मधुपर्क-वृद्धिश्राद्ध-गर्भाधान-पुंसवन-जात-कर्म-नामकरण-उपनयन-विवाहादिसंस्काराणां ब्रह्मचर्य-गृहस्थ-वानप्रस्थ-सन्यासाश्रमाणां च स्वरूपप्रतिपादनम् । आह्निकसारे ब्राह्ममुहूर्त्त-शौच-दन्त-धावन-केशप्रसाधनादि-ब्रह्मयज्ञ-तर्पण-वैश्वदेव-दैनिकश्राद्ध-भोजन-सायंसन्ध्यादीनामनेकपदार्थानां विवेचनम् । श्राद्धसारस्तु मुद्रापयितुमुपक्रान्त एवातः स एव सति समये द्रष्टव्यः । कालसारे-कालस्वभाव-मास-तिथि-नवरात्र जन्माष्टमीप्रभृतिनिरूपणम् । व्यवहारसार-प्रायश्चित्तसारौ मुद्रितावेव द्रष्टव्यौ । कर्मविपाकसारे प्राचीनकर्मपरिणामविचारः । व्रतसारे-व्रतशब्दार्थनिर्णयः, मासिकव्रतानि, स्त्रीभिर्नरैर्वा कार्याणि व्रतानि च प्रतिपादितानि । दानसारे-दानपदार्थः, दानपरिणामः, दानस्थान-दानपात्र-सुवर्णदान-रजतदानादीनां वर्णनम् । तुलाहिरण्यगर्भ-ब्रह्माण्ड-कल्पपादपदानादिषोडशमहादान-गोभूविद्यादानातिदान-ग्रहण-संक्रान्तिदानादीनि प्रतिपादितानि । तीर्थसारविषयः प्रतिपादितपूर्व एव सप्तमपृष्ठे । प्रतिष्ठासारे-प्रतिष्ठादिविवरणम् ।

पुस्तकमिदं काशिकसरस्वतीभवनपुस्तकालयमन्तरा न कुत्रापि सम्पूर्णावयवं प्रायो विद्यते । यथा चैतद्विवरणमाफ्रेक्ट्महोदयस्य कौटोलागस् कैटोलागोरमाख्ये ग्रन्थे—

१—संस्कारसारः ( N. P. V. १५८, S. B. १२७ ) ।

२—आह्निकसारः ( इन्डिया ऑफिस ४० १ ) ( A. S. P. ६६ )
( इन्डिया० ४०१ ) ।

३—श्राद्धसारः ( N. W. ८४, सूचीपत्र ३६ ) ( A. S. P. ९६) ( इन्डिया० ४०१ ) ।

४—कालनिर्णसारः ( N. W. ८८ ) ( A. S. P. ९६ ) ( इन्डिया० ४०१ ) ।

५—व्यवहारसारः ( N. W. ९८ ), ( A. S. P, ९६ ),

६—प्रायश्चित्तसारः ( N. W. ९८ ), ( A. S. P. ९६ ) ( अलवर १३७६ ) ( इन्द्रिया० ४०१ ) ।

७—कर्मविपाकसारः ( N. W. ७४, सूचीपत्र ३५ ) (A. S. P. ९६ ) ( इन्डिया ४०१ ) ।

८—व्रतसारः ( N. W. ७४, सूचीपत्र ३५ ) ( इन्डिया० ४०१ ) ।

९—दानसारः (रिपोर्ट २३, बीकानेर ४२९) (डेक्कनकालेजपूना नं० ३५३ १८७५-७६ ) (इन्डिया० १४६७ नम्बर) ( मित्रसूचीपत्रे ) ।

१०—शान्तिसारः ( बीकानेर ४३०, अवध १०, १८ ) (इन्डिया० १४६७ नं० ) ।

११—तीर्थसारः ( रिपोर्ट २३, ) ( डेक्कनकालेजपूना ३५३० १८७५-७६ नं० ) C. S. २, ३३२ ) ।

१२—प्रतिष्ठासारः ( अवध० ११-१२ ) ( N. P. V. ५०, १६०, S. B. १५० ) ।

---

## नृसिंहप्रसादस्य निर्माणकालः ।

ग्रन्थोऽयं बहूनां ग्रन्थानां सारमादाय निर्मितो दलपतिमहाराजेन। यथा च संस्कारसारे समुद्धृतानि निबन्धग्रन्थानां नामानि ।

"कालादर्शानन्तभट्ट-विज्ञानेश्वर-भट्टहेमाद्रि-दीपिकाविवरण-असहाय-प्रयोगपरिजात-मदनपारिजात-कृत्यकल्पतरु-माधव-स्मृतिचन्द्रिका-स्मृतिरत्नावलि-स्मृतिदर्पण-स्मृतिचिन्तामणि-स्मृतिभास्कर-

मेधातिथि-विज्ञानतिलक-अपरार्क-विज्ञानमार्तण्ड-भोजराजीयविश्वरूपनिबन्ध-नारायणीय-गणेश-वाक्यमीमांसा-निबन्धसर्वस्व-स्मृतिमहार्णव-शातातपीयकर्मविपाकसमुच्चय-माधवीय-मैगुलिकर्मविपाक-प्रवराध्याय-प्रवरमञ्जरी-जातिविवेकप्रमुखानेकनिबन्धान्" इत्यादि ।
( संस्कारसारे ३ पृष्ठे B. ) ।

किंच विशिष्टग्रन्थग्रन्थकाराश्च संस्कारसारे सोमेश्वर ( तन्त्रवार्तिकटीकाकार ) कालदीपौ, आह्निकसारे पुराणसारः, व्यवहारसारे-पारिजातवादिभयङ्करौ, दानसारे—ज्ञानरत्नावलीबालार्कोदयौ, समुल्लिखिताः । अयं नृसिंहप्रसादाख्यो ग्रन्थोऽपि बहुषु ग्रन्थेषु प्रमाणतया समुद्धृतः । यथा—शङ्करभट्टस्य द्वैतनिर्णये, नीलकण्ठकृतभगवन्तभास्करे, संस्कारकौस्तुभे, कमलाकरस्य निर्णयसिन्धौ मुहूर्तचिन्तामण्यादिग्रन्थेषु च ।

अस्मिन् नृसिंहप्रसादग्रन्थे माधवाचार्यस्य मदनपारिजातस्य चाभिमतं बहुत्र संगृहीतमित्यतोऽयं ग्रन्थः १४०० ईशवीयवर्षानन्तरं निर्मित इत्यवगम्यम् । शङ्करभट्टीयद्वैतनिर्णये नीलकण्ठभट्टीयभगवन्तभास्करे चास्योल्लेखात् १५७५ ई० वर्षपूर्ववर्त्तिनानेन ग्रन्थेन भाव्यम् ।

किंच वाराणसेयगवर्नमैण्टपुस्तकालयसरस्वतीभवनस्थमिदं नृसिंहप्रसादपुस्तकं धर्माधिकारिणो नन्दपण्डितस्य (१)पितुर्धर्माधिकारिश्रीरामपण्डितसमये काश्यां १५६८—१५६९ वैक्रमाब्दयोः (१५१२ ई० ) (२)प्रतिलिपीकृतमिति १५१२ ईशवीयवर्षपूर्ववर्ती निर्माणसमयोऽस्य ।

( १ ) धर्माधिकारिनन्दपण्डितेन १६२३ ईशवीयवर्षे विष्णुस्मृतिटीका वैजयन्तीनाम्नी निर्मिता ।

( २ ) आह्निकसारप्रथमपृष्ठे—"सं १५६८ समये आश्विनवदि १३ शुक्रवासरे, आह्निकसारान्तिमपृष्ठे— "संवत् १५६९ वैशाखवदि शुक्रे"

अथ ग्रन्थकारो दलपतिमहाराजो निजामशाहस्य प्रधानमन्त्रीति बहुत्र ग्रन्थे लिखितम् । असावहमदनिजामशाहश्च १४९०–१५०८ ई० वर्षं यावत् देवगिरि ( दौलताबाद ) राज्यमुपबुभोजेत्युपर्यु क्तैः प्रमाणैर्ग्रन्थोऽयं १४९०—१५०८ ई० वर्षाभ्यन्तर एव निर्मितिमापन्न इति निश्चयम् ।

---

## प्रायश्चित्तसारः ।

नृसिंहप्रसादान्तर्गतः षष्ठो विभागोऽयं प्रायश्चित्तसारो नाम । असौ माधवाचार्यविरचितां पराशरस्मृतिटीकां विज्ञानेश्वरविरचितां याज्ञवल्क्यस्मृतिटीकां मिताक्षराख्यां च बाहुल्येनात्र सर्वत्रानुवदति । (१)पुराणानि, स्मृतयः, ऋषयो मुनय एवात्र प्रमाणत्वेन संगृहीता इति सत्यपि प्रायश्चित्तग्रन्थानां भूयस्त्वे ग्रन्थस्यास्य प्रकाशनावश्यकता । व्रतेतिकर्तव्यता, कृच्छ्रप्रत्याम्नायाः, तीर्थप्रत्याम्नायाः, प्रायश्चित्ताकरणे दोषाः, पापकर्मविपाकः, प्रेतत्वजननकर्माणि, इत्यादीनि सर्वाणि प्रायश्चित्तोपयोगीन्यङ्गान्यस्मान्न बहिर्भू तानि । किं बहुना सरलया सरण्या प्रायश्चित्तविषयप्रतिपादकोऽयं ग्रन्थः सर्वेषां विदुषां करकमलेभ्यो न वियोक्ष्यतीति मे दृढो विश्वासः ।

प्रायश्चित्ताचरणापद्धतिरियमतिप्राचीना । यजुर्वेदे ( ३८।१२ ),

"स इत् श्योनं हरति ब्रह्मा वासः सुमङ्गलम् ।
प्रायश्चित्तिं योऽध्येति येन जाया न रिष्यति" ॥

---

कर्मविपाकसारान्ते "संवत् १५६१ समये काशीपुरी श्रीविश्वेश्वरचरण—
संनिधाने वैशाखवदि ७ शुक्रे,,
तीर्थसारान्ते च सं० १५६८ समये वैशाखवदि द्वितीयारवौ" इति लिखितं वर्त्तते ।

( १ ) ग्रन्थोद्धृतग्रन्थग्रन्थकारसूची मयाग्रे प्रत्ता ।

इत्यथर्ववेदे ( १४।१।३० ), सामवेदब्राह्मणे मन्त्रब्राह्मणे (१।४१), तैत्तिरीयब्राह्मणे च प्रायश्चित्तशब्दो गृहीतो वर्तते। सामवेदीयताण्डयमहाब्राह्मणे ( १७।१।१४-१५ ) सामवेदीये लाट्यायनश्रौतसूत्रे च ( ८।६ ) व्रात्यस्तोमविधानं प्रायश्चित्तस्यैव स्वरूपान्तरम्। कात्यायनश्रौतसूत्रे "कर्मोपपाते प्रायश्चित्तं तत्कालम्" ( २५ अं० १ सू०), पारस्करगृह्येच—"अग्ने प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि,

ब्राह्मणस्त्वा नाथकाम उपधावामि,
यास्यै पतिघ्नी तनूस्तामस्यै नाशय स्वाहा"

इति चतुर्थीकर्मप्रसङ्गे, गोभिलगृह्यसूत्रे च, प्रायश्चित्तशब्दोपादानम्। धर्मसूत्रेषु मनुयाज्ञवल्क्यपराशरविष्णुहारीतादिनिर्मितासु प्रायः सर्वास्वेव स्मृतिषु (१)च प्रायश्चित्तस्योपदेशो विधानं च विस्तरशो वर्त्तत एवेत्यविदितम्।

अग्निपुराणे ( १७०—१७४ अ० ), ब्रह्माण्डपुराणे ( उपसंहारपादे ८) गरुडपुराणे ( ५२, २२२ अध्या ययोर्महापातकानि ), कूर्मपुराणे ( उत्तरार्धे ३०—३४ ); लिङ्गपुराणे ( ८० अध्याये यतिकृते ) नारदपुराणे ( पूर्वार्धे १४, ३० ), पद्मपुराणे ( धर्मखण्डे १८-१९ ), सौरपुराणे ( ५२ अ० ), वाराहे ( १३१-१३७, १७६ अ० अगम्यागमनप्रायश्चित्तम् ), वायुपुराणे [ पूर्वार्धे १८ अ० यतिकृते ]; इत्यादिपुराणेष्वपि प्रायश्चित्तं विधीयते।

धर्मशास्त्रनिबन्धग्रन्थेषु च प्रायश्चित्तप्रतिपादका बहवो ग्रन्थाः। तेषु कतिचनैते मुख्याः—हेमाद्रिकृतचतुर्वर्गचिन्तामणेः प्रायश्चित्तखण्डम्, विज्ञानेश्वरकृतयाज्ञवल्क्यस्मृतिटीकामिताक्षरायाः प्रायश्चित्ता-

---

( १ ) अत्र्याङ्गिरसयमापस्तम्बसंवर्तशातातपस्मृतयः प्रायश्चित्तस्यैव प्रतिपादिकाः। शङ्ख ( १७-१८ अ० )-गौतम ( २१-२९ अ० )-वशिष्ठादि ( २०-२१ अ० ) स्मृतीनां कतिचनाध्यायाः प्रायश्चित्तप्रतिपादनपराः।

वाचार्यकृतपराशरस्मृतिटीकायाः पाराशरमाधवीयाख्या·
त्तकाण्डम्, देवणभट्टस्य स्मृतिचन्द्रिकायाः प्रायश्चित्त·
दनरत्नम्, मदनपारिजातस्य नवमः स्तवकः, शूलपाणेः
वेकः, रघुनन्दनभट्टाचार्यस्य प्रायश्चित्ततत्त्वम्, नीलकण्ठ·
न्तभास्करस्य प्रायश्चित्तमयूखः, मित्रमिश्रकृतवीरमित्रो·
यश्चित्तप्रकाशः, काशीनाथोपाध्यायस्य प्रायश्चित्तेन्दुशे·
लन्यायपञ्चाननकृतः प्रायश्चित्तकदम्बः, वापूभट्टकृता प्रा·
री, काश्मीरराजरणवीरसिंहकारितप्रायश्चित्तमहानिबन्धः,
कृतः प्रायश्चित्तव्यवस्थासारसमुच्चयश्चेत्यादि।

---

## प्रायश्चित्तशब्दार्थः।

य पापस्य चित्तं विशोधनं यस्मात्तत् प्रायश्चित्तम्। अत्र नृतीनि च संज्ञायाम्" इत्यत्र "प्रायस्य चित्तिचित्तयोः" ाकोक्त्या सुट् निपात्यते। अनुष्ठितेन द्वादशवार्षिकव्रतादि· कृतं पापं निवर्त्तत इति विश्वासो निश्चयः। तेन संयुक्तं प्रायश्चित्तम्। यथाहाङ्गिराः—

"प्रायो नाम तपः प्रोक्तं चित्तं निश्चय उच्यते।
तपो निश्चयसंयुक्तं प्रायश्चित्तमिति स्मृतम्" ॥ इति।

पापिनोऽनुतापिनश्चित्तं व्याकुलं सद्विषमं भवति, तच्च परि· व्रतानुष्ठानेन प्रायशोऽवश्यं समं कार्यते तद्व्रतं प्रायश्चित्तम्।

—"प्रायशश्च समं चित्तं चारयित्वा प्रदीयते।
परिषदा कार्यते यत्तत् प्रायश्चित्तमिति स्मृतम्" ॥ इति।

समीकरणोपपादनं चारयित्वा प्रदीयत इति, व्रतं चार·

परिषद्युपविष्टानां सर्वेषां चित्तं यथा समं भवति तथा चारयित्वैकम-त्येन विचार्य प्रदीयते विधीयते अनुष्ठाप्यत इत्यर्थः-इति पराशरस्मृ-तिटीकायां माधवाचार्यः ।

शूलपाणिस्तु—"प्रायो नाम तपः प्रोक्तम्" इत्यङ्गिरोवचनप्रामा-ण्यात् पापक्षयमात्रसाधनं कर्म प्रायश्चित्तम् । यथाह हारीतः—"प्रय-तत्वाद्वोपचितमशुभं नाशयतीति प्रायश्चित्तम्" इत्याह । "वाशब्द एवार्थे । उपचितं सञ्चितमशुभं पापं प्रयतत्वाद् यथाविध्यनुष्ठीयमा-न्नाशयति न तु फलान्तरं जनयति तत्कर्म प्रायश्चित्तमिति तुलापुरुषा-दिव्यावृत्तिः । प्रायःशब्देनाभोजनमात्रमुच्यते । तच्चात्र विशिष्टं तपः शास्त्रविहितानशनं प्राजापत्यादीत्यर्थः । चित्तं चितो संज्ञाने धातोर-र्थवशान्निश्चयार्थम् । स च निश्चयः पापसाधनतयेति मुनेराशयः । एतेन स्वर्गसाधनतया प्राजापत्यादिकं क्रियते तदा न प्रायश्चित्तम्" इति प्रायश्चित्तविवेकटीकातत्वार्थकौमुदी ।

रघुनन्दनभट्टाचार्यस्तु—"हारीतः—'प्रयतत्वाद्वोपचितमशुभं ना-शयतीति कृततत्तत्कर्मभिः कर्तुः प्रयतत्वाद्वा शुद्धत्वादेव तत् प्राय-श्चित्तम् । तथा च—हारीतः—"यथा क्षारोपस्वेदचण्डनिर्णोदनप्र-क्षालनादिभिर्वासांसि शुद्ध्यन्ति, एवं तपोदानयज्ञैः पापकृतः शुद्धिमु-पयान्ति" । तेन पापक्षयमात्रसाधनत्वेन विधिबोधितं कर्म प्रायश्चि-त्तम्" इत्याह स्म ।

---

## प्रायश्चित्तस्य नैमित्तिकत्वमधिकारी च ।

ननु—"प्रायश्चित्तैरपैत्येनः" इत्यादिस्मृतिषु पापक्षयस्य फलत्वे-नावगमात्कामुकस्याधिकारात्काम्यं प्रायश्चित्तम् । यथा वृष्टिका-मस्य कारीर्यादीष्टिः । अन्ये तु—पापं निमित्तीकृत्य विधानान्नैमि-त्तिकम् । यथा गृहदाहनिमित्ते क्षामवतीष्टिरित्याहुः । अपरे मन्वते-

अकरणे प्रत्यवायदर्शनान्नित्यम्। यथा सन्ध्यावन्दनादि। अकरणे प्रत्यवायश्च मनुना दर्शितः ( ११।५२ )—

"चरितव्यमतो नित्यं प्रायश्चित्तं विशुद्धये।
निन्द्यैर्हि लक्षणैर्युक्ता जायन्तेऽनिष्कृतैनसः" ॥ इति।

याज्ञवल्क्येनापि—

"प्रायश्चित्तमकुर्वाणाः पापेषु निरता नराः।
अपश्चात्तापिनः कष्टान्नरकान् यान्ति दारुणान्" ॥ इति।

अत्रोच्यते—नैमित्तिकमेवेदं भवितुमर्हति। निमित्तमेवोपजीव्य सर्वेषां प्रायश्चित्तानां विधानात्। निमित्तोपजीवनं च "ब्रह्महा द्वादशाब्दानि" ( याज्ञ० ३।२४३ ) इत्यादौ स्पष्टम्। यत्तु फलश्रवणं तत् जातेष्टिन्यायेन नैमित्तिकत्वेऽप्यविरुद्धम्। तस्यापि फलस्य नियोज्यविशेषणत्वेनाश्रवणाच्च काम्यत्वम्।

नाप्येतन्नित्यम्। न ह्युदाहृतानि वचनानि प्रायश्चित्ताकरणे नूतनं किञ्चिद् दुरितापूर्वं जनयन्ति। किं तर्हि, 'प्रायश्चित्तमकुर्वतोऽवश्यं निषिद्धाचरणेषु प्रवृत्तिर्भवति' इति प्रतिपादयन्ति। "पापेषु निरता नराः" ( याज्ञ० ३।२२ ) इत्यादौ।

बृहस्पतिरपि प्रायश्चित्तस्य नैमित्तिकत्वमेवाह स्म। यथा—
'नैमित्तिकं धर्मजातं गदतो मे निबोधत।
विहितस्याननुष्ठानात्प्रतिषिद्धनिषेवणात् ॥
प्रायश्चित्तं यत् क्रियते तन्नैमित्तिकमुच्यते" इत्युपक्रमे,
"नैमित्तिकं समाख्यातं प्रायश्चित्तं समासतः" इत्युपसंहारे च।

एवं प्रायश्चित्तस्य नैमित्तिकत्वे तन्निमित्तं दुरितापूर्वम्। तदुत्पत्तिकारणं च याज्ञवल्क्य आह स्म "विहितस्याननुष्ठानात्" इति, "अकुर्वन्विहितं कर्म" ( ११।४४ ) इति मनुरपि च।

ननु निन्दितसेवनाद्भावरूपाद् दुरितोत्पत्तावपि विहिताकरणादभावात् कथं दुरितोत्पत्तिः। न हि अभावाद् भाव उत्पद्यमानः क्वचिद् दृष्टः।

अत्र केचिदाहुः—सन्ध्यावन्दनादिविहितानुष्ठानमग्निहोत्राद्यनधिकाररूपाशुचित्वद्योतकम्। यथा च "अकुर्वन् प्रत्यवैति" इत्यनेनाभिधीयते। न त्वनुष्ठानाभावाद् भावरूपस्य दुरितस्योत्पत्तिरभिधीयते। स चानधिकारः प्रायश्चित्तेन निवर्तनीय इति।

अपरे तु—"अकुर्वन्" इत्यत्र लक्षणार्थे शतृप्रत्ययः। यदेतद्विहिताकरणं तदेत्प्राग्भवीयनिषिद्धाचरणजन्यदुरितापूर्वसद्भावस्य लिङ्गम्। तदेव दुरितं प्रायश्चित्तेन निवर्तते।

अथ केषांचित्समाधानम्–अभावाद् भावो नोत्पद्यते इति नायमेकान्ततो नियमः। तार्किकमते प्रागभावस्य कारणत्वात्। मीमांसकमते भाट्टैस्तावदभावाद् भावोत्पत्तिः स्वीकृता। योग्यानुपलब्धिलक्षणात् अभावात् प्रमाणाद् घटाद्यभावविषयप्रमितेर्भावरूपाया जननात्। प्राभाकरैश्चाभावो भाव एवाभ्युपेयते। "भावान्तरमभावो हि कयाचित्तु व्यपेक्षया" इत्युदीरणात्। तथा च सति विहिताकरणमपि भावान्तरमिति कृत्वा तस्मात्प्रत्यवाय उत्पद्यतां तव का हानिः।

ननु प्रत्यवायो नाम दुरितापूर्वम्। तच्च कृतिसाध्यत्वे सति कृत्युद्देश्यम्। तथा च विहिताकरणस्य कृतिरूपत्वाभावाऽपूर्वजनकत्वं नास्ति।

अत्रोच्यते–उक्तलक्षणे विहितप्रतिषिद्धकर्मजन्यापूर्वविषयत्वेन संकोचनीयत्वात्। अन्यथोपेक्षालस्याभ्यामकृतिरूपाभ्यां दुरितापूर्वानुत्पादप्रसङ्गात्। उपेक्षाजन्यं च पापं स्कन्दपुराणे–

"नाभिरक्षन्ति ये शक्ता दीनं चातुरमाश्रितम्।
आर्तं च नानुकम्पन्ते ते वै निरयगामिनः"॥ इति।

आलस्यजन्यं चापमृत्युनिमित्तं दुरितं मनुना प्रदर्शितम्--

"अनभ्यासाच्च वेदानामाचारस्य च लङ्घनात् ।
आलस्यादन्नदोषाच्च मृत्युर्विप्राञ्जिघांसति" ॥ इति ।

अथ कथञ्चित्तत्र कृतिः सम्पाद्यते तर्हि तत्रापि विहितोल्लङ्घनलक्षणा कृतिरस्तु । एवं च सति बहूनि स्मृतिवचनान्यकरणे प्रत्यवायपराणि स्वारस्येनार्थवन्ति भविष्यन्ति ।

ईश्वरवादिनां तु विहिताकरणस्याज्ञोल्लङ्घनरूपत्वात्कृतिरूपत्वं विस्पष्टम् । अत एव स्मर्यते—

'श्रुतिस्मृती ममैवाज्ञे यस्ते उल्लङ्घ्य वर्त्तते ।
आज्ञाच्छेदी मम द्वेषी मद्भक्तोऽपि न वैष्णवः" ॥ इति ।

तदेवं विहिताकरणादिनिमित्तवन्तं प्रति चोदनान्नैमित्तिकं प्रायश्चित्तम् ।

ननु गौतमस्मृतौ चास्य काम्यत्वं स्वीक्रियते । यथा हि पुरुषोऽयाज्ययाजनमभक्ष्यभक्षणादिकर्मसु याप्येन कर्मणा लिप्यते । तत्र प्रायश्चित्तं कुर्यात् न कुर्यात् इति मीमासन्ते । तथा हि न कुर्यादित्येके । अयमाशयः—न कर्म कृतं भोगमन्तरेण क्षीयते । यथा चाह—

"नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि ।
अवश्यमनुभोक्तव्यं कृतं कर्म शुभाशुभम्" ॥ इति ।

शङ्खोऽपि—"यथा पृथिव्यां बीजानि रत्नानि निधयो यथा ।
एवमात्मनि कर्माणि तिष्ठन्ति प्रभवन्ति च" ॥ इति ।

यदि भोगमन्तरेण दुरितलेपः क्षीयेत तदा सुकृतलेपोऽपि क्षीयेतेति प्रसङ्गः । ततश्च प्रायश्चित्तं न कर्तव्यम् ।

उच्यते—"पुनस्तोमेनेष्ट्वा पुनः सवनमायान्ति अयाज्ययाजनादिभिरधिकाराद् भ्रष्टा एकाहिकेनेष्ट्वा सवनत्रयसाध्यं कर्म पुनः

प्राप्नुवन्ति तत्राधिक्रियन्त इति यावत् । 'नाभुक्तं क्षीयते" इति त्वकृतप्रायश्चित्तविषयं सुकृतविषयं च । तथा च स्मृत्यन्तरम्-

कदाचित्सुकृतं कर्म कूटस्थमिव तिष्ठति ।
मज्जमानस्य संसारे यावत्तस्माद्विमुच्यते" ॥ इति ।

यदि "नाभुक्तम्" इति शास्त्रमसङ्कोचेनैव निरकुशं प्रवर्त्तेत तदा पापक्षयप्रतिपादिकाः सर्वाः श्रुतयः स्मृतयश्च कुप्येरन् । तस्मात्पापक्षयाय प्रायश्चित्तं कर्तव्यमिति सिद्धान्ताभिधानात्प्रायश्चित्तं काम्यम् । न तु नैमित्तिकमिति । नैष दोषः । जातेष्टिदृष्टान्तेन दत्तोत्तरत्वात् । अन्यथा पूर्वोदाहृतबृहस्पतिवचनविरोधाच्च ।

ननु-नैमितिकत्वे ग्रहणस्नानस्येव प्रायश्चित्ताकरणे दुरितान्तरमुत्पद्येत । ततः तस्यापि प्रायश्चित्तान्तरं तस्याप्यकरणे दुरितान्तरं प्रायश्चित्तान्तरमित्येवमनवस्था दुरवस्था स्यात् ।

अत्र केचिदाहुः-प्रायश्चित्तानि न केवलं नैमित्तिकानि किन्तु दुरितक्षयार्थान्यपि । अत एवाहापस्तम्बः-'दोषनिर्घातार्थानि भवन्ति स्म, एवं सति प्रायश्चित्ताकरणे दोषनिर्घाताभावेन पूर्वसिद्धदोषस्तदवस्थ इत्येतावन्मात्रं न तु दोषान्तरमुत्पद्यते इति । यद्वा ग्रहणस्नानाद्यकरणमिव प्रायश्चित्ताकरणं निमितीकृत्य प्रायश्चित्तान्तरविधानस्यादर्शनात् तन्निमित्तदुरितान्तरं न कल्पयितुं शक्यम् । तस्मान्नैमित्तिकत्वेऽपि नानवस्था ।

पुनः शङ्कते-दोषनिर्घातोऽपि नैकान्तिकः । तथा हि द्विविधं पापम् । कामकृतमकामकृतं च । यथा बृहस्पतिः-'कामाकामकृतं तेषां महापापं द्विधा स्मृतम्' । एतयोरकामकृतपापे विनष्टेऽपि न कामकृतविनाशः । यथा मनुः-'इयं विशुद्धिरुदिता प्रमाप्याकामतो द्विजः" इति ( ११।८९ ) । बौधायनोऽपि—

"अमत्या ब्राह्मणं हत्वा दुष्टो भवति धर्मतः ।
ऋषयो निष्कृतिं तस्य वदन्त्यमतिपूर्वके ॥
मतिपूर्वं हते तस्मिन् निष्कृतिर्नोपलभ्यते" ॥ इति (२।१।६)।

अत्रोच्यते—नायं दोषः । द्वादशाब्दादिना निष्कृत्यभावेऽपि भृगुपतनादिना तत्संभवात् । तथोक्तम्—

"यः कामतो नरः कुर्यान्महापापं कथञ्चन ।
न तस्य निष्कृतिर्दृष्टा भृग्वग्निपतनादृ ऋते" ॥ इति ।

शातातपोऽपि—"अकामावाप्तौ प्रायश्चित्तम् । कामकारकृते त्वात्मानमवसादयेत्" इति । अतः प्रायश्चित्तेन दोषनिर्घातो नानैकान्तिकः । तस्मान्निर्हर्तव्यदोषाख्यनिमित्तवानत्राधिक्रियत इति पराशरस्मृतिव्याख्याने माधवाचार्याशयः ।

---

## प्रायश्चित्तकर्तव्यत्वम् ।

अथ खल्वयं पुरुषो वाच्येन कर्मणा लिप्यते यथैतद्याज्ययाजनमभक्ष्यभक्षणमवद्यवदनं शिष्टस्याक्रिया प्रतिसिद्धसेवनमिति । तत्र प्रायश्चित्तं कुर्यान्न कुर्यादिति मीमासन्ते । न कुर्यादित्युचितम् । न हि कर्म क्षीयते । कुर्यादित्यपरे—'पुनस्तोमेनेष्ट्वा पुनःसवनमुपयान्तीति विज्ञायते । "व्रात्यस्तोमेनेष्ट्वा तरति सर्वं पाप्मानं तरति ब्रह्महत्यां तरति योऽश्वमेधेन यजते ॥ अग्निष्टुताभिशप्यमानं याजयेदिति प्रायश्चित्तविवेके गौतमः ।

अत्रेदं विशदीकरणम्—

"न कुर्यादिति पूर्वपक्षः । कर्मणां भोगादेव क्षयात् । कुर्यादिति सिद्धान्तः । पुनःस्तोमादीनां प्रायश्चित्तानां श्रुतौ निदर्शनात् ।

न च 'ज्ञानाग्निः सर्वकर्माणि भस्मसात्कु[illegible]नः” इति वाच्यम् । तत्त्वज्ञानिनां शुकनारदादीनामुपभोगदर्शना[illegible]रारम्भकादृष्टानां भोगैकनाश्यत्वनियमस्य कॢप्तत्वनियमात् [illegible] गोविन्दानन्दीया तत्त्वार्थकौमुदीटीका । मनुनापि–'चरितव्यमतो [illegible]त्यं प्रायश्चित्तं विशुद्धये” इत्युक्तम् । “तस्मात्कर्तव्यमेवेह प्रायश्चित्तं विशुद्धये” इति पापफलकथनानन्तरं शङ्खलिखितावाहतुः । भविष्यपुराणेऽपि–

“व्यतिक्रमाद् यथा पुत्र दोषोत्पत्तिर्भवेदिह ।
प्रायश्चित्तात्तु देवेन्द्र दोषक्षय इति श्रुतिः” ॥ इति ।

इत्थं प्रायश्चित्तस्य कर्तव्यतावश्यिकीति निर्णीयते ।

---

## प्रायश्चित्तकालः ।

प्रायश्चित्ते विलम्बो न कार्यः । अपि तु तत्तत्कालमेव विधेयम् । यथा कात्यायनश्रौतसूत्रे “कर्मोपपाते प्रायश्चित्तं तत्कालम्” ( २५ अ० १ कं० १ सू० ) । हारीतोऽपि च ब्रूते—“यथा क्षारोपस्वेदचण्डनिर्णोदनप्रक्षालनादिभिर्वासांसि शुद्धयन्ति, एवं तपोयज्ञदानैः पापकृतः शुद्धिमुपयान्ति, ध्मायमाना इव धातवोऽग्नौ दोषेभ्यः, तस्माद्विश्रम्भात् स्नेहाल्लोभाद्भयात् प्रमादात् वाऽशुभं कृत्वा सद्यः शौचमारभेत” इति ।

पापं कृत्वा सद्यो व्यवस्थापिकायां परिषदि गन्तव्यम् । तदा भोजनमपि न कर्तव्यमित्यङ्गिरसा प्रतिपादितम्—

“कृते निःसंशये पापे न भुञ्जीतानुपस्थितः ।
भुञ्जानो वर्धयेत्पापमसत्यं पर्षदि ब्रुवन् ॥
सचैलं वाग्यतः स्नात्वा क्लिन्नवासाः समाहितः ।
उपस्थाय ततः शीघ्रमार्तिमान् धरणीं गतः” ॥ इति ।

---

## प्रायश्चित्तेन पापक्षयो न वा ।

यथाह याज्ञवल्क्यः—

"प्रायश्चित्तैरपैत्येनो यदज्ञानकृतं भवेत् ।
कामतो व्यवहार्यस्तु वचनादिह जायते" इति ।

अत्रापरार्कव्याख्यानमिदम्—"अज्ञानकृतं पापं प्रायश्चित्तैर्नश्यति। कामकृतस्य पापस्य तु प्रायश्चित्तैर्न क्षयः । किन्तु वचनाल्लोके संव्यवहार्यता जनयोग्यता भवति । एतच्च महापातकेष्वेव । उपपातकादिकं तु कामकृतमपि नश्यति प्रायश्चित्तैः । यथाह छागलेयः—

"प्रायश्चित्तमकामानां कामावाप्तौ न विद्यते ।
उपपातक एव स्यात्तथा चात्मोपघातिने" ॥ इति ।

अयमर्थः—कामपूर्वके पापे प्रायश्चित्तं पापक्षयपर्यन्ततया न विद्यते । उपपातकात्महत्ययोस्तु कामपूर्वके विद्यते इति । यानि पुनर्मरणान्तिकप्रायश्चित्तानि तैः पापक्षयो भवत्येव । तथा चापस्तम्बः- "गुरुं हत्वा श्रोत्रियं वा कर्म समाप्तमेतेनैव विधिनोच्छ्वासांश्चरेत् । नास्यास्मिँल्लोके प्रत्यापत्तिर्विद्यते कल्मषं तु निहन्यते" ।

यमोऽपि—

"महापातककर्तारश्चत्वारोऽप्यविशेषतः ।
अग्निं प्रविश्य शुद्ध्यन्ति स्नात्वा महति वा क्रतौ" ॥ इति ।

युक्तं चैतत् । अन्यथा प्राणान्तिकव्रतविधिरनर्थकः स्यात् । महापातकमपि प्रायश्चित्तैः क्षीयत इत्युक्तं श्रुतौ—"तरति ब्रह्महत्यां योऽश्वमेधेन यजते" इति । अत्र रात्रिसत्रन्यायेनार्थवादिकयोः संव्यवहारपापक्षययोः स्वीकारः ।

ज्ञानतः कामतः इति—ज्ञानतः कामतश्चैनस्वी प्रायश्चित्तैर्व्यव-

तैरपापो भवत्येव । यथा म्लेच्छैर्हठात्सुरां पायितः । कामाद् यद् भवति तद् भ्रान्तिपूर्वकात्प्रमाणपूर्वकाच्च भवति । तत्र कामतो व्यवहार्य इत्यनेन प्रमाणपूर्वकात्कामतः इत्येवं परं वेदितव्यम् । भ्रान्तिपूर्वककामकृतं पापं प्रायश्चित्तापनेयमेव यथा दूरस्थे ब्राह्मणे स्थाणुभ्रान्त्या हते । यत एव भ्रान्तिपूर्वकरागकृतं पापं प्रायश्चित्तं हेयम् । यथा मनुः—

"अकामतः कृतं पापं वेदाभ्यासेन शुद्ध्यति ।
कामतस्तु कृतं पापं प्रायश्चित्तैः पृथग्विधैः" ॥ इति ।

अज्ञानं संशयो विपर्ययो मोहश्च" इत्यादि ।

मदनपारिजाते चापरार्कसिद्धान्त एव स्वीकृतः । तथा हि "मरणान्तिकप्रायश्चित्तं सर्वत्र महापातकेषु विद्यत एव । "कामात्तु द्विगुणं प्रोक्तम्" इत्यादिवचनबलाद् द्वादशवार्षिकादिद्वैगुण्यादियुक्तप्रायश्चित्तमपि विद्यते । तेन प्रायश्चित्तेन च लोके व्यवहार्यत्वनित्यकर्मानुष्ठानप्रतिबन्धकपापशक्त्यपनयनं भवति । एवं च पापस्य द्वे शक्ती नरकोत्पादिका व्यवहारनिरोधिकेति । किंच लोके व्यवहार्यो भवति प्रायश्चित्तैः । तत् कामकृतमहापातकानां मरणान्तिकप्रायश्चित्तव्यतिरिक्तविषयम् । मरणान्तिकप्रायश्चित्ते कृते लोके इह प्रयोजनाभावात् पारलौकिकं पापापनोदनं फलं कल्पनीयम्" इत्यादि ।

बालक्रीडा चैवं व्याख्याति—प्रायश्चित्तैः पापं यस्मादबुद्धिपूर्वकृतं बुद्धिपूर्वकृतं वापगच्छति तस्मात्प्रायश्चित्तान्यवश्यं कर्तव्यानि । ननु च कामकृतं पापं प्रायश्चित्तैर्नापगच्छति । वचनसामर्थ्यात्संव्यवहार्यत्वमात्रं जायते । यथा मनुः—

"इयं विशुद्धिरुदिता प्रमाप्याकामतो द्विजम् ।
कामतो ब्राह्मणवधे निष्कृतिर्न विधीयते" ॥ इति ।

तथा—"अकामतः कृते पापे प्रायश्चित्तं विधीयते" इति स्वाभिप्रायेणोक्तम् । तथा श्लोकोत्तरार्धेण परमतोपन्यासः कृतः । "कामकारकृतेऽप्याहुरेके श्रुतिनिदर्शनात्" । अपरे वैदिकैरर्थवादैर्मोहिताः केचित्कामकारकृतेऽपि प्रायश्चित्तमाहुः । न तु तन्ममाभिप्रेतमिति भगवतोऽभिप्रायः । तथा च वसिष्ठः—"अनभिसंधिकृते प्रायश्चित्तमपराधे" । अतः कामकृते पापेऽपि प्रायश्चित्तात्पापापगम इति न मनोरभिप्रेतम् । कथं तर्ह्ययं श्लोकः—"एनस्विभिरनिर्णिक्तैर्नार्थं किञ्चित्समाचरेत्" । अत एवाग्रे चोक्तम्—

"कृतनिर्णेजनांश्चैनान् न जुगुप्सेत कर्हिचित्" । इति ।

अयं सारः—यद्यपि कामकृतं पापं प्रायश्चित्तैर्नापगच्छति । तथापि कृतप्रायश्चित्तानेनान् व्यवहारविषये न मनागपि जुगुप्सेत । अन्यथा ह्यनिर्णिक्तैर्नाचरेदित्युक्तेः सामर्थ्यात् कृतनिर्णेजनांश्चैनानित्यतारतम्यमेव स्यात् । तस्मात् कामकृते संव्यवहार्यत्वमात्रं न पापापगम इति पूर्वपक्षः ।

अत्रोच्यते—प्रायश्चित्तं तावद् दोषवति निमित्ते विधीयमानं फलान्तरानुपपत्तेर्दोषनिर्घातार्थमेव । तत्र निमित्तगतः श्रूयमाणोऽपि विशेषो "यस्योभयं हविरार्त्तिमार्च्छेत्" इतिवदविवक्षितः । तेनोभयत्राविशेषेणैव ब्रह्महत्यादौ प्रायश्चित्तोपदेशः । यत्तु—"कामतो ब्राह्मणवधे निष्कृतिर्न विधीयते" इति तन्निन्दार्थं वा, न तु प्रायश्चित्तनिवृत्त्यर्थम् । पूर्वार्धेनैव सिद्धार्थत्वात् । तथा सत्यानर्थक्यप्रसङ्गः स्यात् ।

नन्वत्र प्रायश्चित्तैर्लोके व्यवहार्यत्वमेव, पापं त्वज्ञानकृतमेवापैतीति चेन्न । श्रुतिविरोधात् । यथोक्तम्—"इन्द्रो यतीन् शालावृकेभ्यः प्रायच्छत्, तमश्लीला वागभ्यावदत्, स प्रजापतिमुपाधावत् तस्मादेतदुपहव्यं प्रायच्छत्" इत्युपक्रम्य "अभिशप्यमानं याजयेत्"

इत्युक्तम् । अतश्चोपक्रमसामर्थ्यात्कामकृत एवैतद् विज्ञायते । तथा 'एतेन हेन्द्रो दैवापः शौनको जनमेजयं पारीक्षितं याजयाञ्चकार" इत्युपक्रम्य 'सर्वां ह वै पापकृत्यां तत्सर्वां ब्रह्महत्यामपहन्ति योऽश्वमेधेन यजते' इति । सर्वग्रहणात्कामकृत एवाश्वमेधो विज्ञायते । अतः पापापनुत्तये प्रायश्चित्तं कर्तव्यं न संव्यवहार्यत्वसिद्ध्यर्थम् । तथा चानन्तरमेवोक्तम्—"पारीक्षिता यजमाना अश्वमेधैः परावरमजहुः कर्म पापकं पुण्याः पुण्येन कर्मणा" इति । पापापनोदनं दर्शयति । अत्र "पुण्याः पुण्येन कर्मणा" इत्यपुण्यमूलोच्छित्तिमेव स्पष्टयति । अतः प्रत्यक्षश्रुत्यानुगुण्येनैव स्मृतिव्याख्यानं युक्तम् । तथा च मनुः—"अकामतः कृतं पापं वेदाभ्यासेन शुध्यति" इत्युक्त्वा "कामतस्तु कृतं मोहात्प्रायश्चित्तैः पृथग्विधैः" इत्युक्तवान् । मोहश्चावलिप्ततया श्रुतिस्मृत्यनादरोऽभिप्रेतो न तून्मादादिलक्षणः । अन्यथा तथाविधस्योन्मत्तादेः कामकृताकामकृतयोरविशेषात् ।

यदि कामकृतेऽधिकारमात्रार्थतोच्येत, ततो मरणान्तिकं प्रायश्चित्तमकामकृत एव स्यात् । जीवप्रायश्चित्तान्येव कामकृते स्युः । मृतस्याधिकारासंभवात् । संव्यवहार्यत्वं हि जीवत एवापेक्षितं यतः । तत्रैवमादीनि वचनान्यसंबद्धानि स्युः । यथापस्तम्बेन "नास्यास्मिन् लोके प्रत्यापत्तिर्विद्यते कल्मषं तु निहन्यते" । तथा "मतिपूर्वमनिर्देश्यं प्राणान्तिकमिति स्थितिः" इति वासिष्ठम् । तथा "अज्ञानाद्वारुणीं पीत्वा संस्कारेणैव शुद्ध्यति" इति च ।

अत्र मिताक्षरायां विज्ञानेश्वरस्यायमभिसन्धिः—ननु कामकृते प्रायश्चित्ताभावात् कथं व्यवहार्यत्वम् । उच्यते—उभयत्र प्रायश्चित्ताविशेषेऽपि फलविशेषः शास्त्रतोऽवगम्यते । अज्ञानकृते तु सर्वत्र पापक्षयः । यत्र तु ब्रह्मसुरापगुरुतल्पगेत्यादिगौतमोक्तमहापातकादौ व्यवहार्यत्वं निषिद्धम् । तस्मिन्पतनीये कर्मणि कामतः कृते व्यवहार्यत्वमात्रं न पापक्षय इति । न च पापक्षयाभावे व्यवहार्यत्वमनु-

पपन्नम् । द्वे हि पापस्य शक्ती नरकोत्पादिका व्यवहारनिरोधिका चेति । तत्रेतरशक्त्यविनाशेऽपि व्यवहारनिरोधिकायाः शक्तेर्विनाशो नानुपपन्नः । तस्मात्पापानवगमेऽपि व्यवहार्यत्वं नानुपपन्नम् । यत्तु मनुवचनम्—"अकामतः" इत्यादि ( ११।४५ ) तत्कामकृतेऽपि प्रायश्चित्तप्राप्त्यर्थम् । अपतनीये कामकृतेऽपि पापक्षयो भवत्येव । "अकामतः कृतं पापम्" ( ११।४६ ) इति मनुवचसः । पतनीयेऽपि कर्मणि कामकृते मरणान्तिकप्रायश्चितेषु कल्मषक्षयो भवत्येव । फलान्तराभावात् । आपस्तम्बवचसश्च ।

अत्र वीरमित्रोदयाख्यमिताक्षराटीकायामिदमुक्तम्—प्राणान्तिकप्रायश्चितेन कामकृतेऽपि महापातके पापं नश्यत्येव । फलान्तरासंभवात् । "नास्यास्मिल्लोके प्रत्यापत्तिर्विद्यते कल्मषं तु निहन्यते" इत्यापस्तम्बवचसः । "हतः शुद्धिमवाप्नुयात्" इति ग्रन्थकृतैव वक्ष्यमाणत्वाच्च । अतः "प्रायश्चित्तैरपैत्येनो" इत्यत्र प्रायश्चित्तपदं मरणान्तिकप्रायश्चित्तव्यतिरिक्तपरम् । अतो द्वादशवार्षिकादिव्रतमभिधाय "विशुद्धिः" इत्यनेन तदेवोपक्रान्तम् । महापातकव्यतिरिक्ते तु कामकृतेऽपि पापे द्विगुणं पापनाशकमपि ।

अत्र प्रायश्चित्तविवेके शूलपाणिराह—"प्रायश्चित्तैरपैत्येनो" कामत इत्यत्राज्ञान कृत—प्रायश्चित्तेन ज्ञानकृतपापापगमो न भवति । किन्तु व्यवहार्यतामात्रम् । ननु पापे सत्यपि कथं व्यवहार्यता, अत्राह वचनादिति । अयमाशयः—अर्धप्रायश्चित्तानुष्ठानेनार्द्धपापक्षयात् संभाषणस्पर्शनदर्शनादिलघुव्यवहारो न दुष्टः । न तु भोजनपरिणयनादिव्यवहारोऽपि वचनादेव । यथा कुनखित्वादिव्याधिसूचितमहापापशेषसद्भावेऽपि व्यवहार्यता ।

अथवा—अकारप्रश्लेषात् ( कामतोऽव्यवहार्यः ) यथोक्तप्रायश्चित्तेन कामतोऽपि पापक्षयो भवत्येव । किन्तु—अव्यवहार्यः पापक्षये-

ऽपि वचनात् । यथा च मनुः—

"बालघ्नांश्च कृतघ्नांश्च विशुद्धानपि धर्मतः ।
शरणागतहन्तॄंश्च स्त्रीहन्तॄंश्च न संवसेत्" ॥ इति ।

"शरणागतबालस्त्रीहिंसकान् संवसेन्न तु" इति च याज्ञवल्क्यः ।

"चीर्णव्रतानपि सदा कृतघ्नसहितानिमान् ।
कृतनिर्णेजकांश्चैव न जुगुप्सेत कर्हिचित्" ॥

इति मनुवचनं त्वज्ञानकृते पापे बोध्यम् ।

ननु कामकृतेऽकामकृतप्रायश्चित्तविधानाभावादेव कथं वचनाद्-व्यवहार्यतेत्याशङ्क्य भवदेवस्तु "सर्वत्र मृतः शुद्धिमवाप्नुयात्" इति दर्शनादत्राव्यवहार्यतावचनं निन्दार्थमित्याह । जिकनस्तु पापकर्मणा द्वयं जन्यते शरीरगतमप्रायत्यम्, आत्मगतं च पापम् । अप्रायत्यं च स्पर्शनादौ वैदिककर्मण्यनर्हत्वलक्षणम् । तेनात्र कामनाकृतः केवल-शरीरदोषः प्रायश्चितेनापनीयते । जन्मान्तरकृतिदुरितस्यैवात्मनः शरीरान्तरस्य व्यवहाराधिकारित्वम् । आत्मगतं च पापं भोगादेव क्षीयते । तन्न । "कामकारकृतेऽप्याहुरेके श्रुतिनिदर्शनात्" इति मनु-वचनात्, उक्तिश्रुतिविरोधाच्च । ननु—अज्ञानप्रतियोगितया ज्ञानत इति वक्तव्ये कामत इति कथमुच्यते । उच्यते—ज्ञानकामनयोरव्यभि-चारप्रदर्शनार्थमिदम् । यथाहाङ्गिराः—

"अकामतः कृते पापे प्रायश्चित्तं न कामतः ।
स्यात्त्वकामकृते यत्तु द्विगुणं बुद्धिपूर्वके" ॥ इति ।

अत्राकामतः इति वक्तव्ये बुद्धिपूर्वक इत्यभिदधातो"ति । एवमत्र संक्षेपतः कामाकामाकृतविकल्पप्रसङ्गेण प्रायश्चित्तेन पापक्षयो भवति न वेत्यनेकग्रन्थप्रदर्शितरीत्या प्रदर्शितम् ।

---

## बालवृद्धादीनां प्रायश्चित्ताल्पत्वम् ।

पापिनां वयो बाल्यं वा विलोक्य प्रायश्चित्तेऽनुग्रहः कार्यः। स्त्रीणां रोगिणां चाप्यनुग्रहो विधेयः। ऊनैकादशवर्षमारभ्याषोडशाद्बाल संज्ञा। स्थविरश्च सप्तत्यूर्ध्वम्। यथा विष्णुः—

"अशीतिर्यस्य वर्षाणि बालो वाप्यूनषोडश।
प्रायश्चित्तार्द्धमर्हन्ति स्त्रियो रोगिण एव च" ॥ इति।

च्यवनश्च—'बालवृद्धस्त्रीणामर्धं प्रायश्चित्तम्, आषोडशाद्बालाः,

यथा—

"स्त्रीणामर्धं प्रदातव्यं वृद्धानां रोगिणां तथा।
पादो बालेषु दातव्यः सर्वपापेष्वयं विधिः" ॥ इति।

विधिरयमूनैकादशवर्षस्य पञ्चवर्षाधिकस्य बालस्य कृते।

यथाङ्गिराः—

"ऊनैकादशवर्षस्य पञ्चवर्षाधिकस्य च।
चरेद्गुरुः सुहृद्वापि प्रायश्चित्तं विशुद्धये॥
ततो न्यूनतरस्यास्य नापराधो न पातकम्।
न चास्य राजदण्डोऽस्ति प्रायश्चित्तं न विद्यते" ॥ इति।

यश्चादिपर्वणि—

"आचतुर्दशकाद्वर्षान्न भविष्यति पातकम्।
परेण कुर्वतामेवं दोष एव भविष्यति" ॥

तदिदमत्यन्तगुणवद्बालविषयम्। तथा च विश्वामित्रः—

"जातिशक्तिगुणापेक्षं सकृद्बुद्धिकृतं तथा।
अनुबन्धादि विज्ञाय प्रायश्चित्तं प्रकल्पयेत्" ॥ इति।

एवं सर्वं शास्त्रीयं प्रायश्चित्तं कथयित्वा पश्चादनुग्रहो विधेयः—

यथाहाङ्गिराः—

"कृत्वा पूर्वमुदाहारं यथोक्तं धर्मवक्तृभिः ।
पश्चात्कार्यानुसारेण शक्त्या कुर्वन्त्यनुग्रहम् ॥
धर्मज्ञा बहवो विप्राः कर्तुमर्हन्त्यनुग्रहम् ।" इत्यादि ।

हारीतः—

"यथा वयो यथा कालं यथाप्राणं च ब्राह्मणे ।
प्रायश्चित्तं प्रदातव्यं ब्राह्मणैर्धर्मपाठकैः ।
तस्मात्कृच्छ्रमथाप्यर्धं पादं वापि विधानतः ॥
ज्ञात्वा बलाबलं कालं प्रायश्चित्तं प्रकल्पयेत्" । इति ।
"दुर्बलेऽनुग्रहः कार्यस्तथा वै शिशुवृद्धयोः ।
अतोऽन्यथा भवेद्दोषस्तस्मान्नानुग्रही भवेत् ॥
स्नेहाद्वा यदि वा लोभान्मोहादज्ञानतोऽपि वा ।
कुर्वन्त्यनुग्रहं ये तु तत्पापं तेषु गच्छति" ॥

इति पराशरवचनमप्यत्रोपयुक्तम् ।

एवं प्रायश्चित्तस्वरूपोपयोगि वक्तव्यमुक्तम् । अधुना पापसम्बन्धे किञ्चिदुच्यते ।

---

## पापम् ।

"चोदनालक्षणोऽर्थो धर्मः" इत्यत्र सूत्रे वेदैकप्रतिपाद्योऽर्थो धर्म इति धर्मलक्षणं कुर्वता जैमिनिना वेदैकप्रतिपाद्योऽनर्थोऽधर्म इति पापलक्षणमपि सूचितम् । अनर्थश्चानिष्टसाधनम् । तथा चोक्तं शबरस्वामिना 'कोऽर्थोऽभ्युदयाय, कोऽनर्थोऽ[illegible]" इति ।

त्रिविधं च पापोत्पत्तिकारणम् । विहिताकरणं निन्दितसेवनमिन्द्रियार्थप्रसङ्गश्चेति । इन्द्रियार्थप्रसङ्ग उभयरूपमिति माधवः । दंशाभिशापरूपमिति शूलपाणिः । यथाह मनुः—

"अकुर्वन्विहितं कर्म निन्दितं च समाचरन् ।
प्रसजंश्चेन्द्रियार्थेषु प्रायश्चित्तीयते नरः" ॥ इति ।

याज्ञवल्क्योऽपि—

"विहितस्याननुष्ठानान्निन्दितस्य च सेवनात् ।
अनिग्रहाच्चेन्द्रियाणां नरः पतनमृच्छति" ॥ इति ।

पापानां च प्राचीनैर्ग्रन्थकारैर्नवधा विभागो विहितः । मातृगमनं दुहितृगमनं स्नुषागमनं चेति त्रीण्यतिपातकानि विष्णुराह । महापातकानि, अनुपातकानि, उपपातकानि, जातिभ्रंशकराणि, मलिनीकरणानि, अपात्रीकरणानि, संकरीकरणानि, प्रकीर्णानि चेति नव । नवप्रकाराण्यप्येतानि प्रकाशरहस्यतया द्विविधानि । एतेषां नामानि प्रायश्चित्तसारस्य १०-११ पृष्ठयोर्द्रष्टव्यानि । पुरुषस्यैतैः पापैः साक्षात्कर्त्रनुग्राहकप्रयोजकानुमन्तृनिमित्तकर्तृभेदात्पञ्चधा संसर्गो भवति । तत्र पालनादिनोपकारकोऽनुग्राहकः । आज्ञापयिताभ्यर्थयितोपदेष्टा च प्रयोजकः । स्वार्थं परार्थं वानुमतिकर्तानुमन्ता । अनिमित्तं भर्त्सनताडनधनहरणादिना कोपं जनयन् तन्मरणे निमित्तं भवेत् स निमित्तकर्ता । एषूत्तरोत्तरमल्पदोषत्वम् , प्रायश्चित्ताल्पत्वं च बोध्यम् । एते पापिनः प्रायश्चित्तमकुर्वाणाः प्रेत्य नरकेषु (१)पतन्ति ततश्च कुनखिश्यावदन्तताकुष्ठितादिरोगयुक्ता जायन्ते ।

---

(१) एकविंशतिनरका इति मनुः । यथा—

तामिस्रमन्धतामिस्रं महारौरवरौरवौ ।
नरकं कालसूत्रं च महानरकमेव च ॥

यथोक्तम्—

"प्रायश्चित्तविहीनानां महापातकिनां नृणाम् ।
नरकान्ते भवेज्जन्म चिह्नाङ्कितशरीरिणाम् ॥
प्रतिजन्म भवेत्तेषां चिह्नं तत्पापसूचितम् ।
प्रायश्चित्ते कृते याति पश्चात्तापवतां पुनः ॥
महापातकजं चिह्नं सप्तजन्मानि जायते ।
उपपापोद्भवं पञ्च त्रीणि पापसमुद्भवम् ॥
दुष्कर्मजा नृणां रोगा यान्ति चोपक्रमैः शमम् ।
जपैः सुरार्चनैर्होमैर्दानैस्तेषां शमो भवेत् ॥
पूर्वजन्मकृतं पापं नरकस्य परिक्षये ।
बाधते व्याधिरूपेण तस्य जप्यादिभिः शमः" ॥ इति ।

कतमेन पापेन कतमो रोगो जायत इति प्रायश्चित्तसारे २१४-२३४ पृष्ठेषु द्रष्टव्यम् । एतेषां पापिनां कियत्कालं यावत् नरके निवासो नरकान्ते च कीदृश्यो योनयो भवन्तीति प्रसङ्गे विष्णुराह—

अतिपातकिनां कल्पं यावत् सर्वाः स्थावरयोनयः, महापातकिनां मन्वन्तरं यावत् कृमियोनयः, अनुपातकिनां च मन्वन्तरं यावत् पक्षियोनयः, उपपातकिनां च चतुर्युगं यावत् जलजयोनयः, कृतजातिभ्रंशकराणां संवत्सरसहस्रं यावत् मृगयोनयः, कृतसङ्करीकरणकर्मणां संवत्सरसहस्रं यावत् पशुयोनयः, कृतमलिनीकरणकर्मणां सं-

---

संजीवनं महावीचिं तपनं सम्प्रतापनम् ।
संघातं च सकाकोलं कुड्मलं पूतिमृत्तिकम् ॥
लौहशङ्कुमृजीषं च पन्थानं शाल्मलं नदीम् ।
असिपत्रवनं चैव लौहचारकमेव च" ॥ इति ।

श्रीमद्भागवते त्वष्टाविंशतिनरका उक्ताः ( ५।२६।६ ) ।

वत्सरसहस्रं यावत् मनुष्येष्वस्पृश्ययोनयः । प्रकीर्णपातकिनां बहून-ब्दान् यावत् प्रकीर्णा हिंस्रा क्रव्यदाश्च योनयो भवन्ति ।

## कृच्छ्रप्रत्याम्नायादिधेनुमूल्यादिविचारः ।

पश्चात्तापी पातकी परिषदि गत्वा विदुषः प्रायश्चित्तं याचेत, सति सामर्थ्ये च तदेवाहीनाङ्गं कुर्यात् । अष्टम्यां चतुर्दश्यां च प्राय-श्चित्तं न कार्यम् । प्रायश्चित्तपूर्वदिने च कृतकेशनखादिवापनो घृतं प्राश्य तीर्थस्थाने तिष्ठेद् द्वितीयदिने दशविधं (१)स्नानं कृत्वा प्राय-श्चित्तं कुर्यादित्यादिव्रतग्रहणप्रकारस्तु प्रायश्चित्तेन्दुशेखरादौ विलोक-नीयः । व्रताशक्तौ च कृच्छ्रप्रत्यम्नायभूता धेनवो देयाः । धेनुदाना-सामर्थ्ये सति तन्निष्क्रयोपकल्पितं मूल्यं प्रदेयम् । मूल्यदानाशक्तेन तावन्त उपवासाः कार्याः ।

धनिनां दरिद्राणां च कृते धेनुमूल्यादिव्यवस्थेयं षट्त्रिंशन्मते—

"धेनुः पञ्चभिराढ्यानां मध्यानां त्रिपुराणिका ।
कार्षापणैकमूल्या हि दरिद्राणां प्रकीर्तिता:" ॥ इति ॥

नवप्रसूतिका धेनुराढ्यानां कृते पञ्चपुराणमूल्यलभ्या, मध्यमानां कृते त्रिपुराणलभ्या, दरिद्राणां कृते च (२)कार्षापणैकलभ्येत्यर्थः ।

---

(१) भस्म–मृत्तिका–गोमय–पञ्चगव्य–गोरजो–धान्य–फल–सर्वौषधि–कुशोदक–हिरण्यैर्दशविधस्नानानि कार्याणि ।

(२) षोडश पणाः कार्षापणः । आणकचतुष्टयमित्यर्थः ।

पयस्विगोमूल्यं धनिनां कृते पुराणत्रयम् , मध्यमानां कृते पुराणद्वयम् , दरिद्राणां कृते च पुराणमेकं ज्ञेयम् । वत्समूल्यमेकं पुराणम् , वृषभमूल्यं च पुराणषट्कम् । यथोक्तं कात्यायनेन—

"द्वात्रिंशत्पणिका गावो वत्सः पौराणिको भवेत्" इति ।

गोमूल्यं द्वात्रिंशत्पणाः पुराणद्वयं, वत्समूल्यं च पुराणमेकमिति सङ्कलने पुराणत्रयं धेनुमूल्यम् । "वृषभः षट्पुराणिकः" इति गौतमवचनं च । अयं भावः—शूलपाणिना प्रायश्चित्तविवेके ब्रह्महननप्रायश्चित्तप्रसङ्गे पयस्विगोमूल्यं चुर्णीत्रयं केवलगोमूल्यं च पुराणमेकमुक्तम् । पुराणैकलभ्यताम्रनिर्मितमुद्राविशेषश्चूर्णीति चूर्णी पुराणमित्यनर्थान्तरम् । अत्र शूलपाणिकृतप्रायश्चित्तविवेकरीत्या केषाञ्चित्कृच्छ्रादीनां प्रत्याम्नायभूता धेनवः संगृह्यन्ते । तथाहि—

चतुर्विंशतिवार्षिकव्रताशक्तौ ३६० धेनवः, २०० धेनवश्च दक्षिणार्थं देयाः । द्वादशवार्षिकव्रताशक्तौ १८० धेनवः, १०० धेनवश्च दक्षिणार्थं देयाः ।

| | |
|---|---|
| मासोपवासव्रताशक्तौ | १५ धेनवः । दक्षिणा च सर्वत्र भिन्ना । |
| पक्षोपवासाशक्तौ | ७॥ धेनवः । |
| चान्द्रायणप्रत्याम्नायाः | ७॥ धेनवः । यत्र चैकमेव चान्द्रायणं तत्राष्टौ । |
| शिशुचान्द्रायणाशक्तौ | ३॥। धेनवः । |
| ऋषिचान्द्रायणाशक्तौ | ३ धेनवः । |
| महासान्तपनाशक्तौ | ६ धेनवः । |
| सान्तपनाशक्तौ | २ धेनू देये । |
| कृच्छ्रातिकृच्छ्राशक्तौ | ६ धेनवः । |
| अतिकृच्छ्रासामर्थ्ये | ३ धेनवः । |

| | |
|---|---|
| सौम्यकृच्छ्रासामर्थ्ये | १ धेनुर्देया । |
| प्राजापत्यकृच्छ्रासामर्थ्ये | १ धेनुर्देया । |
| पराककृच्छ्राशक्तौ | पञ्च धेनवो देयाः । |
| तुलापुरुषकृच्छ्राशक्तौ | २ धेनू देये । |
| तप्तकृच्छ्राशक्तौ | ३॥ धेनवो देयाः । |
| वारुणकृच्छ्राशक्तौ | १ धेनुर्देया । |
| पर्णकृच्छ्राशक्तौ | अर्धधेनुर्देया । |
| त्र्यहसाध्यब्रह्मकूर्चाशक्तौ | पुराणैकलभ्यं काञ्चनं देयम् । |

इत्थमत्र प्रायश्चित्तोपयोगिविषयः सामान्येन निर्दिष्टो विस्तरशस्तु ग्रन्थे विलोकनीय इत्यवदातम् ।

---

अथ प्रायश्चित्तसारोद्धृतग्रन्थानां

## संक्षिप्तपरिचयः ।

अग्निपुराणम्—यदीशानकल्पीयवृत्तमग्निना वसिष्ठाय प्रोक्तं तदग्निपुराणमुच्यते । अत्र ३८१ अध्यायाः । १५४०० श्लोकाश्च । एतत्पुराणप्रथमभागे विष्णोरवताराः वर्णिताः । उत्तरभागे च तान्त्रिकक्रियाकलापः, शैवोपासना, शिवतत्वम्, भूगोलवर्णनम्, राजधर्मः, युद्धविद्या, वेदपुराणादिवृत्तम्, राजवंशावली, आयुर्वेदः, अलङ्कारशास्त्रम्, छन्दःशास्त्रम्, व्याकरणशास्त्रं च संक्षेपेण विवृतम् ।

आदित्यपुराणम्—इदं ग्रन्थकारेण २०६ पृष्ठे समुद्धृतम् । इदमुपपुराणान्तर्गतं च ।

यथोक्तं देवीभागवते उपपुराणसंख्यावासरे—

"सौरं पाराशरप्रोक्तमादित्यं चातिविस्तरम्" इति

( ३ अ० १६ श्लोके ) ।

आयुर्वेदनिघण्टुः—आयुर्वेदनिघण्टुग्रन्थेष्वयमतिप्राचीनो धन्वन्तरीयनिघण्टुनाम्नापि व्यपदिश्यतेऽसौ । काशीराजश्रीधन्वन्तरिरस्य वक्ता । धन्वन्तरेरनन्तरं केनचित्सम्प्रदायशिष्येण विदुषायं लिखित- इति षष्ठवर्गान्तश्लोकतो विज्ञायते । यथा—

"द्रव्यावलिः समुद्दिष्टा धन्वन्तरिमुखोद्गता" इति ।

उमामहेश्वरसंवादः—स्कन्दपुराणान्तर्गतनागरखण्डान्तर्गतः । यत्र भगवता स्कन्देन तत्पुरुषकल्पीयं महेश्वरचरितं नन्दिने प्रोक्तं तत्स्कन्दपुराणम् । अत्र ८१००० श्लोकाः । शङ्करसंहिताप्रामाण्येन स्कान्दे षट् संहिताः पञ्चाशत्खण्डानि चेति ज्ञायते । सनत्कुमारसंहिता, सूतसंहिता, शङ्करसंहिता, वैष्णवसंहिता, ब्राह्मसंहिता, सौरसंहितेति षट्संहिताः । प्रचलितस्कन्दपुराणीयप्रभासखण्डे तु-माहेश्वरखण्डम् ( केदारखण्डम् ), वैष्णवखण्डम् ( उत्कलखण्डम् ), ब्रह्मखण्डम् , काशीखण्डम् , रेवाखण्डम् , प्रभासखण्डं चेति सप्त खण्डानि स्कान्दस्योक्तानि । नारदपुराणे च--अम्बिकाखण्डम् , माहेश्वरखण्डम् , ( अत्रत्यकेदारकुमारिकाखण्डे एव प्राप्येते ), ब्रह्मखण्डम् , प्रभासखण्डं चेति दशोक्तानि खण्डानि । निम्ननिर्दिष्टान्यपि खण्डानि स्कन्दपुराणान्तर्गतानि कथ्यन्ते । यथा—सह्याद्रिखण्डम् , अर्बुदाचलखण्डम् , कनकाद्रिखण्डम् , काश्मीरखण्डम् , कौशलखण्डम् , गणेशखण्डम् , उत्तरखण्डम् , भैरवखण्डम् , मलयाचलखण्डम् , मानसखण्डम् , कालिकाखण्डम् , श्रीमालखण्डम् , पर्वतखण्डम् , सेतुखण्डम् , हालास्यखण्डम् , हिमवत्खण्डम् , महाकालखण्डम् , अग-

सत्यसंहिता, ईशानसंहिता, उमासंहिता, सदाशिवसंहिता, प्रह्लादसंहिता, चेति ।

कूर्मपुराणम्—अस्मिन् ब्राह्मीभागवतीसौरीवैष्णवीसंहितेत्याख्यानि चत्वारि खण्डान्यासन् । किन्त्वधुना ब्राह्मीखण्डमेवोपलभ्यते । यत्कूर्मरूपधरो जनार्दनो लक्ष्मीकल्पीयवृत्तमिन्द्रद्युम्नप्रसङ्गेन शक्रसन्निधौ महर्षिभ्यः प्रोक्तवान् तत्कौर्मं पुराणम् । अत्र १७००० श्लोकाः । पूर्वभागे ५३ अध्यायाः । उत्तरत्र च ४५ अध्यायाः । यथा—

"यत्र धर्मार्थकाममोक्षाणां मोक्षस्य च रसातले ।
महात्म्यं कथयामास कूर्मरूपी जनार्दनः ॥
इन्द्रद्युम्नप्रसङ्गेन ऋषिभ्यः शक्रसन्निधौ ।
सप्तदश सहस्राणि लक्ष्मीकल्पानुषङ्गिकम्" ॥(मत्स्यपुराणे)

गारुडम्—यद् गारुडकल्पीयं वृत्तं भगवता विष्णुना गरुडायाभिहितं तद्गरुडपुराणम् । अत्र १८००० श्लोकाः । अस्य द्वे खण्डे । पूर्वखण्डे सृष्टिप्रक्रिया, धर्मकार्यादि, तान्त्रिकप्रक्रिया, ज्यौतिषम् , सामुद्रिकम् , आयुर्वेदः, रत्नपरीक्षाप्रभृति वर्णितानि । उत्तरखण्डे च प्रेतप्रक्रिया प्रदर्शिता । अस्मिन्पुराणे गरुडजन्मापि वर्णितम् ।

चतुर्विंशतिमतम्—एतत्सारभूतश्चतुर्विंशतिमतसंग्रहाख्यो धर्मशास्त्रग्रन्थो भट्टोजिदीक्षितनिर्मितः, काशिकचौखम्बासंस्कृतग्रन्थामालमुद्रितश्च ।

चमत्कारखण्डम्—स्कन्दपुराणान्तर्गतनागरखण्डान्तर्वर्त्तीदम् ।

धर्मविवृतिः—अप्राप्तविवरणा ।

नन्दिपुराणम्—इदं नन्दिना प्रोक्तमुपपुराणम् । यथाष्टादश पुराणानि तथैवाष्टादशोपपुराणान्यपि । यथा च सूतसंहितायामुपपुराणनामानि–

"अन्यान्युपपुराणानि मुनिभिः कीर्तितानि तु ।
आद्यं सनत्कुमारेण प्रोक्तं वेदविदां वराः ॥
द्वितीयं नारसिंहाख्यं तृतीयं नान्दमेव च ।
चतुर्थं शिवधर्माख्यं दौर्वासं पञ्चमं विदुः ॥
षष्ठं तु नारदीयाख्यं कापिलं सप्तमं विदुः ।
अष्टमं मानवं प्रोक्तं ततश्चोशनसेरितम् ॥
ततो ब्रह्माण्डसंज्ञं तु वारुणाख्यं ततः परम् ।
ततः कालीपुराणाख्यं विशिष्टं मुनिपुङ्गवाः ॥
ततो वासिष्ठलैङ्गाख्यं प्रोक्तं माहेश्वरं परम् ।
ततः साम्बपुराणाख्यं ततः सौरं महाद्भुतम् ॥
पाराशरं ततः प्रोक्तं मारीचाख्यं ततः परम् ।
भार्गवाख्यं ततः प्रोक्तं सर्वधर्मार्थसाधकम्" ॥ इति ।

देवीभागवतोक्तान्युपपुराणनामानि भिद्यन्ते । तानि च तत्रैव (३ अ० १३—१६ श्लो० ) द्रष्टव्यानि ।

नागरखण्डम्—स्कन्दपुराणान्तर्गतम् । अत्र नागरब्राह्मणानामुत्पत्तिरपि वर्णिता ।

नारदपुराणम्—बृहत्कल्पीयान् धर्मान् यन्नारदोऽब्रवीत्तन्नारदीयं महापुराणम् । अत्र २५००० श्लोकाः । अस्मिन् विष्णुस्तुतिः, वैष्णवाख्यानादि, हरिभक्तिः, वैष्णवानां धर्मा आचरणानि च वर्णितानि । बम्बईमुद्रितं नारदीयं पुराणं प्राचीनत्वे न विश्वासार्हम् ।

पद्मपुराणम्—पाद्मकल्पोक्तं वृत्तमधिगत्य यत्रोक्तं तत्पद्मपुराणम् । अत्र ५५००० श्लोकाः । अत्र-सृष्टि-भूमि-स्वर्ग-पाताल-उत्तराख्यानि पञ्च खण्डानि । तत्र सृष्टिखण्डे-ब्रह्माण्डसर्गः, भृगुप्रभृतिमुनिवंशराजवंशादि, पुष्करतीर्थमाहात्म्यं च प्रतिपादितम् । भूमिखण्डे १२७ अध्यायाः । अत्र तीर्थमहर्षिचरितादिवर्णनम् , सप्तद्वीपादिभूभागव-

र्णनं च । स्वर्गखण्डे वैकुण्ठलोकवर्णनम् , वर्णाश्रमधर्मप्रतिपादनम् , आख्यानानि च । पातालखण्डे--पातालनागलोकवर्णना, रामचन्द्राख्यानम् , कृष्णबाललीला, विष्णुभक्तिमाहात्म्यं च । उत्तरखण्डे च शिवः पार्वतीं प्रति विष्णुभक्तिं वैष्णवचिह्नधारणं विष्णोरवतारान् विष्णुमूर्तिनिर्माणं चोवाच ।

पाराशरस्मृतिः—कलियुगधर्मप्रधानेयं स्मृतिः । यथोक्तम्—

"कृते तु मानवाः प्रोक्तास्त्रेतायां गौतमाः स्मृताः ।
द्वापरे शङ्खलिखिताः कलौ पाराशराः स्मृताः" ॥

अत्र द्वादशाध्यायाः । पराशरमुनिना व्यासाय प्रोक्तेयम् । अत्र माधवाचार्येण बुक्कभूपमन्त्रिणा पाराशरमाधवीयाख्या बृहती टीका विरचिता ।

परिशिष्टम्—अप्राप्तविवरणम् ।

प्रभासखण्डम्—स्कन्दपुराणान्तर्गतम् । अत्र प्रभासक्षेत्रस्य ( सौराष्ट्रदेशान्तर्वर्तिन्याः श्रीद्वारिकापुर्याः ) माहात्म्यवर्णनम् ।

ब्रह्मपुराणम्--ब्रह्मणा मरीचये प्रोक्तम् । १३००० श्लोकाः । अस्य पूर्वखण्डे देवासुरोत्पत्तिः, सूर्यचन्द्रवंशयोर्वर्णनम् , भूगोलखगोलवर्णनं च । उत्तरखण्डे चोत्कलदेशीयतीर्थवर्णनम् । अत्र जगदीशमन्दिरसूर्यमन्दिरयोरुल्लेखोऽपि वर्तते । योगप्रक्रिया, युगधर्मः, वर्णाश्रमधर्मः, तीर्थविवरणम् , गङ्गोत्पत्तिश्च वर्णिता ।

ब्रह्मवैवर्त्तपुराणम्--यत्र सावर्णिना नारदाय रथन्तरकल्पीयवृत्तमधिकृत्य कृष्णमाहात्म्यमुक्तं तथा ब्रह्मवराहोदन्तश्च वर्णितस्तद् ब्रह्मवैवर्त्तपुराणम् । अत्र १८००० श्लोकाः । ब्रह्म-प्रकृति-गणेश-कृष्णजन्माख्यानि चत्वारि खण्डानि । अत्र वृन्दावनीयश्रीराधाकृष्णलीला विशे-

वेण वर्णिता । सावित्री-सुरभि-स्वाहा-स्वधा सुरथदुर्वासोऽभिशाप-कार्तवीर्य-परशुरामादीनामाख्यानानि कथितानि ।

भरद्वाजगृह्यसूत्रम्—इदं सूत्रं कृष्णयजुर्वेदिनाममुद्रितं च ।

भविष्योत्तरम्—भविष्यपुराणोत्तरखण्डरूपम् । यत्र चतुर्मुखः सूर्य-माहात्म्यमधिकृत्याघोरकल्पीयवृत्तप्रसङ्गेन मनवे जगत्स्थिति भूतग्राम-स्वरूपं च कथयामास तद्भविष्यपुराणम् । भविष्यचरिताधिक्याच्च भविष्यमित्याख्या । अत्र १४५०० श्लोकाः । भविष्योत्तरश्लोकसङ्ख्या चातिरिक्ता ।

मनुस्मृतिः—भृगुप्रोक्ता सर्वप्राचीनेयं स्मृतिः । अत्र द्वादशाध्यायाः २६८५ श्लोकाश्च । भगवता सूर्यपुत्रेण मनुना संगृहीता कृतयुगीय-धर्मशास्त्ररूपेयम् । अत्राष्टौ टीकाः । सर्वस्मृत्यपेक्षयाधिकं प्रामाण्यमस्याः । तथोक्तम्—

"मन्वर्थविपरीता तु या स्मृतिः सा न शस्यते" इति ।

मार्कण्डेयपुराणम्—मकण्डुसूनुना मुनिना मार्कण्डेयेन प्रोक्तमिदम् । अत्र ९००० श्लोकाः । दुर्गासप्तशतीमन्त्रा अप्यत्रत्या एव । अस्मिन् पुराणे वृत्रासुरवधः, बलदेवप्रायश्चित्तम्, नहुषययातिहरिश्चन्द्रोपाख्यानानि, वसिष्ठविश्वामित्रकलहः, सृष्टिप्रक्रिया, मन्वन्तराणि च वर्णितानि ।

मिताक्षरा—इयं याज्ञवल्क्यस्मृतिटीका । असौ टीका राष्ट्रकूटवंशीय-विक्रमादित्यमहाराजाश्रितेन विज्ञानेश्वरेणैकादशशताब्द्यां विरचिता । अत्रत्यो व्यवहाराध्यायोऽधिकं प्रमाणीभूतः। अत्र विश्वेश्वरकृता सुबोधिनी बालंभट्टकृता लक्ष्मीः मित्रमिश्रकृता वीरमित्रोदयाख्या व्याख्याः सन्ति ।

याज्ञवल्क्यस्मृतिः—इयं याज्ञवल्क्यमुनिप्रोक्ता । अत्र १००९ श्लोकाः।

आचार-व्यवहार-प्रायश्चित्ताख्यास्त्रयोऽध्यायाः । मनुस्मृतिं विहाय सर्वस्मृत्यपेक्षयाधिकं प्रामाण्यमस्याः । अत्र विश्वरूपकृता बालक्रीडा, अपरार्ककृता टीका, शूलपाणिकृता दीपकलिका चेति व्याख्यात्रयमुपलभ्यते ।

राजनिघण्टुः—अयमायुर्वैदिकशब्दानां कोशो नरहरिणा निर्मितः । अत्र कर्णाटकमहाराष्ट्रभाषाभ्यां द्रव्याणां परिचयो लिखितः ।

यथोक्तम्—

"व्यक्तिः कृतात्र कर्णाटमहाराष्ट्रीयभाषया ।
आन्ध्रलाटादिभाषास्तु ज्ञातव्यास्तद्द्वयाश्रयाः" ॥ इति

रेवाखण्डम्—स्कन्दपुराणान्तर्गतम् । स्कन्दपुराणविवरणं दत्तपूर्वम् ।

वाक्यमीमांसा—अप्राप्तविवरणा ।

वामनपुराणम्—त्रिविक्रमकथामवलम्ब्य यत्र चतुर्मुखस्त्रिवर्गमुवाच तद्वामनं पुराणम् । अत्र १०००० श्लोकाः । अत्र वामनावतार-दानमहात्म्य—देवदानवसंग्रामः-महिषासुरनाशः—दक्षयज्ञ—मदनदहन—शिवपार्वतीविवाह-कुमारजन्मप्रभृतिशिवकल्पीयवृत्तवर्णनम् । उत्तरभागो बृहद्वामनाख्यस्तत्र माहेश्वरी-भागवती-सौरी-गाणेश्वरीति चतस्रः संहिताः सन्ति ।

वायुपुराणम्—यत्र श्वेतकल्पीयं रुद्रमाहात्म्यं वायुरब्रवीत्तद्वायुपुराणम् । अत्र २४००० श्लोकाः । शिवपुराणान्तर्गता वायुसंहितैव वायुपुराणमिति केचित् । इदं पुराणं चतुर्धा विभक्तम् । तत्र प्रथमभागे—ब्रह्माण्डसर्गो जीवसर्गश्च वर्णितः । द्वितीये ऋषिवंशावलिः, कल्पादि, ब्रह्माण्डवर्णनम्, मन्वन्तराणि, शैवाख्यानादि । तृतीये पृथक् २ जीवानां वर्णनम्, चन्द्रसूर्यवंशीयानां राज्ञां वंशवर्णनम् । चतुर्थे च—योगप्रक्रिया, शिवमाहात्म्यं च । मुद्रितवायुपुराणे तु द्वौ भागौ ६१+५० = १११ अध्यायाश्च सन्ति ।

वायुसंहिता—इयं शिवपुराणान्तर्गता । बम्बईमुद्रितशिवपुराणे द्वादशसंहिताः सन्ति ।

विष्णुधर्मोत्तरम्—विष्णुपुराणोत्तरखण्डरूपं बम्बईमुद्रितं च । यत्र पराशरो वराहकल्पवृत्तमाह स्म तद्विष्णुपुराणम् । विष्णुपुराणे २३००० श्लोकाः ।

विष्णुस्मृतिः—यजुर्वेदीयकाठकशाखायाः यो धर्मसूत्रग्रन्थ आसी-त्तमवलम्ब्येयं स्मृतिर्विनिर्मिता । इयं मुद्रिता । अत्र धर्माधिकारिन-न्दपण्डितेन वैजयन्ती टीका कृता । ९६ अध्यायाः । अत्र श्लोकाः सूत्रा-ण्यपि । लघुविष्णुस्मृतिस्त्वन्या । तत्र ५ अध्यायाः, १०५ श्लोकाश्च । वर्णाश्रमधर्मा एवात्र निरूपिताः ।

शिवधर्मोत्तरम्—शिवपुराणपरिशिष्टम् ।

षट्त्रिंशन्मतम्—अप्राप्तविवरणम् ।

सुबोधिनी—इयं विश्वेश्वराचार्यकृता याज्ञवल्क्यस्मृतिटीकामिताक्ष-राव्याख्या । इयं टीका मुद्रिता बम्बईगवर्नमेन्टसंस्कृतग्रन्थमालायाम् ।

सुश्रुतः—सुश्रुतमहर्षिणा ग्रथितोऽयमायुर्वेदग्रन्थः काशीराजेन ध-न्वन्तरिणा दिवोदासेनोपदिष्टः । आयुर्वेदे कायशल्याख्ये द्वे मुख्ये चिकित्से । तत्र कायचिकित्साप्रधानं चरकतन्त्रम् । शल्यचिकित्साप्र-धानं च सुश्रुततन्त्रम् । अत्र सूत्रस्थाने ४६ अ०, निदानस्थाने १६ अ०, शारीरकस्थाने ९ अ०, चिकित्सितस्थाने ४० अ०, कल्पस्थाने ८ अ०, उत्तरतन्त्रे च ६६ अध्यायाः । सर्वेषामेतेषां सङ्कलनेन १८४ अध्यायाः सन्ति । आयुर्वेदे चरकसुश्रुतवाग्भट्टाख्या ग्रन्थत्रयी सुप्रसिद्धा ।

स्कान्दम्—स्कन्दपुराणम् । एतद्विवृतपूर्वम् ।

स्मृतिसंग्रहः—स्मृत्यर्थसारानन्तरं निर्मितः । ११५०-१२०० ईशवीये समये स्मृत्यर्थसारो निर्मितः ।

सुवर्णस्तेयकृद्विप्रो राजानमधिगम्य तु" ॥ इत्यादि ।

अयमत्र प्रकारः—उक्तपरिमाणविशिष्टं ब्राह्मणसुवर्णमपहृत्य स्वविशुद्धिं स्ववधेन राजकर्तृकेण सम्पादयितुं प्रहारसाधनं खादिरमायसं वा मुसलमादाय राजसमीपे गच्छेत् । गत्वा चेदृशं पापकारिणं मां प्रहरेति वदेत् । ततो राजकर्तृकान्मुसलसाधनकाद्वधाच्छुद्धिर्जायते । अथ मुसलप्रहारेण न मृतस्तदापि शुध्यति । अथवा राज्ञा तस्मिन् हते निराधारः सकलोऽपि पुत्रमित्रकलत्रभृत्यादिपोष्यवर्गः किं करिष्यतीत्यनुकम्पया रक्षितोऽपि शुद्ध एवेति भवति ।

तदुक्तं मनुना—

"अत ऊर्ध्वं प्रवक्ष्यामि सुवर्णस्तेयनिष्कृतिम् ।
सुवर्णस्तेयकृद्विप्रो राजानमधिगम्य तु ।
स्वकर्म ख्यापयन् ब्रूयात् मां भवाननुशास्त्विति ॥
स्कन्धेनाधाय मुसलं लकुटं वापि खादिरम् ।
असिं वोभयतस्तीक्ष्णमायसं दण्डमेव वा ॥
शासनाद्वा विमोक्षाद्वा स्तेनदोषाद्विमुच्यते ।
अशासित्वा तु तं राजा स्तेनस्याप्नोति किल्बिषम्" ॥ इति ।

सकृत्ताडने मृतः शुध्येन्मरणात् । मुक्तो वा जीवन्नपि शुध्येदिति यावत् । विप्र इति नरमात्रोपलक्षणपरम् । "प्रायश्चित्तीयते नरः" इति "नरः" इत्यस्य प्रकृतत्वात् । इदं च मरणान्तिकप्रायश्चित्तं मतिपूर्वं सुवर्णस्तेयादिविषयम् ।

"मरणान्तेऽपि यत् प्रोक्तं प्रायश्चित्तं महर्षिभिः ।

इति मध्यमाङ्गिरःस्मरणात् । इदं च राज्ञा हननं ब्राह्मणव्यतिरिक्तविषयम् । यतो हि—

"न जातु ब्राह्मणं हन्यात् सर्वपापेष्ववस्थितम्" ।

इति मानवीयवचनम् । आत्मानं स्तेनो हन्यात् । तेन च शुद्धः स्यात् ।

तदुक्तं वसिष्ठेन—"स्तेनः प्रकीर्णकेशो राजानमभियाचेत । ततस्तस्मै राजा औदुम्बरं शस्त्रं दद्यात् । तेनात्मानं प्रमापयेत् । मरणात्पूतो भवतीति विज्ञायते" इति । औदुम्बरं ताम्रमयम् ।

इदं हि प्रायश्चित्तं गुरुश्रोत्रियथागस्थादिब्राह्मणद्रव्यापहारविषयम् । क्षत्रियाद्यपहर्तृविषयं वा । इदं सर्वमपि प्रायश्चित्तं तत्कामकारविषयम् ।

अकामकारविषये तु प्रायश्चित्तान्तरम् । राज्ञेऽनिवेद्यैव सुरापव्रतं द्वादशवार्षिकं कुर्यात् । द्वादशवार्षिकानुष्ठानाशक्तौ तु धनाभावे विप्रतुष्टिकरं कुटुम्बार्थे धनं वा दद्यात् । आत्मतुल्यं सुवर्णं वा दद्यात् । तदाह योगी—

"अनिवेद्य तु यः शुध्यै सुरापव्रतमाचरेत् ।
आत्मतुल्यं सुवर्णं वा दद्याद्वा विप्रतुष्टिकृत्" ॥ इति ।

बहुधनाभावे विप्रतुष्टिकरं कुटुम्बार्थे धनं दद्यात् ।

ननु ब्रह्मवधसुरापानादेरकामतः सम्भवेऽपि सुवर्णहरणं न सम्भवति इति चेन्न । वस्त्रप्रान्तग्रथितसुवर्णादेरज्ञानतोऽप्यपहारसम्भवात् । रजतादिबुध्या वा तत्सम्भवः । यदा हि रजतबुध्या गृहीतमन्यहस्ते दत्तं नाशितं वा न पुनः स्वामिने प्रत्यर्पितमिति । रसवेधाद्यापादितसुवर्णस्य ताम्रादेरपहारे न मुख्यजातिस्वरूपाभावान्नेदं प्रायश्चित्तम् ।

निर्गुणस्वामिकधनापहारे "एतदेव व्रतं स्तेये पादन्यूनं समाचरेत्" इति व्यासवचनात्पादोनं नववार्षिकम् ।

निर्गुणस्यैव क्षुत्क्षामकुटुम्बरक्षणाय हेमहरणे—

"षडब्दं वा चरेत् कृच्छ्रं यजेद्वा क्रतुना द्विजः ।
तीर्थानि चाधिगच्छन्वा ततस्तेनाद्विमुच्यते" ॥

इत्यत्रिस्मरणाज्ज्ञेयम् । अपहरणानन्तरमेव जातानुतापस्यापहृतधनस्य प्रत्यर्पणे त्यागे वा आपस्तम्बोक्तं चतुर्थाकालमिताशनेन त्रिवर्षमनुष्ठानं ज्ञेयम् । अपहारस्य भोगपर्यन्तत्वात्प्रागुपभोगान्निवृत्तौ मुख्यस्यापहारस्याभावादेतदेव व्रतम् ।

मनसा सुवर्णापहारे "सुवर्णस्तेयी द्वादशरात्रं वायुभक्षस्तिष्ठेत्" इति सुमन्तुप्रोक्तं ज्ञेयम् । सर्वेष्वपि सुवर्णपरिमितसुवर्णाधिकापहारप्रायश्चित्तेषु स्त्रीबालवृद्धादिष्वर्द्धं ज्ञेयम् ।

षोडशमाषन्यूनपरिमाणे व्रतमुच्यते । यतो द्वित्रादिमाषात्मकसुवर्णाहरणं तु क्षत्रियादिहेमहरणवदुपपातकमेव न महापातकम् । अत एव तत्र प्रायश्चित्तान्तरमुपदिष्टं षट्त्रिंशन्मते—

"बालाग्रमात्रेऽपहृते प्राणायामं समाचरेत् ।
लिक्षामात्रेऽपि च तथा प्राणायामत्रयं बुधः ॥
राजसर्षपमात्रे च प्राणायामचतुष्टयम् ।
गायत्र्यष्टसहस्रं च जपेत्पापविशुद्धये ॥
गौरसर्षपमात्रे तु सावित्रीं वै दिनं जपेत् ।
यवमात्रसुवर्णस्य प्रायश्चित्तं दिनद्वयम् ॥

सुवर्णकृष्णलं त्वेकमपहृत्य द्विजोत्तमः ।
कुर्यात्सान्तपनं कृच्छ्रं तत्पापस्यापनुत्तये ॥
अपहृत्य सुवर्णस्य माषमात्रं द्विजोत्तमः ।
गोमूत्रयावकाहारस्त्रिभिर्मासैर्विशुध्यति ॥
सुवर्णस्यापहरणे वत्सरं यावकी भवेत् ।
ऊर्द्ध्वं प्राणान्तिकं ज्ञेयमथवा ब्रह्महव्रतम्" ॥ इति ।

तस्मादयमत्र निष्कर्षः—सकृत्पापे गुरुश्रोत्रिययागस्थादिब्राह्मणात् षोडशमाषाधिकसुवर्णापहरणे मरणान्तिकं प्रायश्चित्तम् । सुवर्णपर्यन्तहरणेऽपि वधः । बलात्सुवर्णपरिमाणादर्वागपि हरणे वधः । तद्वदेकादशाधिकं स्वामिने दत्त्वा व्रतं तदेव । निर्द्धनस्वामिकधनापहारेण चाब्दम् । आपदि षडब्दम् । श्रोत्रियधनिकेन यज्ञः । निर्द्धनश्रोत्रियेण तीर्थम् । तच्च मरणं राजकर्तृकं स्वकर्तृकं वा । तपश्चर्या कर्तव्या च । तत्र वधो जातिमात्रनिर्गुणविषयः । सगुणश्रोत्रियवनस्थविषयं तु तपः । वने वसन् ब्रह्महत्याव्रतं चरेदित्यर्थः । निर्गुणस्यापि प्रमादेन सुवर्णापहारे व्रतमेतद् द्वादशवार्षिकम् । न वधः । द्वादशवार्षिकाशक्तो बहुधनश्चेत्तदात्मतुल्यं धनं दद्यात् । तावद्धनाभावे विप्रतुष्टिकरं यावज्जीवं कुटुम्बं वा दद्यात् । निर्गुणस्वामिकापहरणे नवाब्दं व्रतम् । निर्गुणस्यैव क्षुत्क्षामकुटुम्बभरणार्थं हरणे षडब्दं व्रतम् । तदशक्तौ यज्ञादि, तदशक्तौ तीर्थयात्रादि । धनापहारानन्तरमेवानुतापेन धने दत्ते त्यक्ते वा त्रैवार्षिकं यावकाहारः । मनसाऽपहारे द्वादशदिनमुपवासः । षट्त्रिंशन्मते—तु सुवर्णपरिमिते वार्षिकमुक्तम् । तन्मन्वादिबहुश्रुतिविरुद्धमुपेक्ष्यम् । इदं प्रायश्चित्तमुक्तं सुवर्णपरिमितहेमहरणे ।

बलात्सुवर्णन्यूनापहारेऽपि वर्षं यावकाहारः । माषमात्रापहारे त्रैमासिकं गोमूत्रयावकाहारः । कृष्णलापहारे सान्तपनकृच्छ्रम् । यवमात्रे दिनद्वयम् । गौरसर्षपे दिनं सावित्रीजपः । राजसर्षपे प्राणायामचतुष्टयं गायत्र्यष्टसहस्रं जपः । लिक्षामात्रे प्राणायामत्रयम् । बालाग्रमात्रे प्राणायामषट्कमिति बहुमतम् ।

"आत्मतुल्यं धनं दद्यात् तुष्ट्यर्थं वा क्रतुं चरेत् ।
षडब्दं वा चरेत् कृच्छ्रं जपतीर्थादिकं तथा" ॥ इति ।

तत्रात्मतुल्यहेमदानमत्यन्तधनिकविषयम् । क्रतुर्धनिकश्रोत्रियविषयः । तीर्थयात्रासहितं षडब्दं निर्धनश्रोत्रियविषयमिति व्यवस्था ।

यत्तु बहुमतमित्यपि यदपि चाश्वरत्नस्त्रीभूधेनुहरणं सुवर्णस्तेयसमं तेष्वर्द्धं पूर्वोक्ताज्ज्ञेयम् । रूप्यहरणे चान्द्रायणम् । दशगद्याणकादूर्ध्वं शतपर्यन्तं द्विगुणम् । शतादूर्ध्वं सहस्रपर्यन्तं त्रिगुणम् । अतः परं हेमविधिः । सर्वलोहप्रभृतिधातुहरणे पराकं चरेत् । धान्यानां हरणे कृच्छ्रम् । तिलहरणे चान्द्रायणम् । रत्नहरणे च चान्द्रायणं व्रतम् ।

तदुक्तं षट्त्रिंशन्मते [ चतुर्विंशतिमते ]—

"रूप्यं हृत्वा द्विजो लोभाच्चरेच्चान्द्रायणं व्रतम् ।
गद्याणदशकादूर्ध्वमाशताद् द्विगुणं चरेत् ॥
आसहस्रं तु त्रिगुणमूर्ध्वं हेमविधिः स्मृतः ।
सर्वेषां धातुलोहानां पराकं तु समाचरेत् ॥
धान्यानां हरणे कृच्छ्रं तिलानामैन्दवं स्मृतम् ।
रत्नानां हरणे विप्रश्चरेच्चान्द्रायणं व्रतम्" ॥

एतदपि वचनम्, तद् गद्याणसहस्रादधिकरजतहरणे सुवर्णस्तेयप्रायश्चित्तप्रतिपादनार्थम् । न पुनस्तन्निवृत्त्यर्थम् । रत्नापहरणे चान्द्रायणाभिधानं तु गद्याणसहस्राद्धीनमूल्यरत्नहरणविषयम् । अत ऊर्ध्वं सुवर्णस्तेयसममित्येवाभीप्सा ।

इति सुवर्णस्तेयव्रतम् ।

## अथ गुरुतल्पप्रायश्चित्तम् ।

अथ क्रमप्राप्तं गुरुतल्पगप्रायश्चित्तमभिधीयते । तत्र निष्कालको घृताभ्यक्तो गुरुतल्पगो लोहशयने शयनं कृत्वा तत्र ज्वलन्तीमायसीं प्रतिमामाश्लिष्य लोहशयनं सूर्मीश्लेषं वा विधाय स्वयमेव लिङ्गं वा सवृषणं छित्वाऽञ्जलावाधाय स्वपापं प्रख्यापयन् नैर्ऋतदिशं गच्छेत् । गुर्वभिमुखं तिष्ठेद् यावच्छरीरपातमिति ।

तथोक्तं मनुना—

"गुरुतल्पगोऽभिभाष्यैनस्तल्पे स्वप्यादयोमये ।
सूर्मीं ज्वलन्तीं वाश्लिष्य मृत्युना स विशुध्यति ॥
स्वयं वा शिश्नवृषणावुत्कृत्याधाय चाञ्जलौ ।
नैर्ऋतिं दिशमातिष्ठेदानिपातादजिह्मगः" ॥ इति ।

तथा च याज्ञवल्क्योऽपि—

"तप्तेऽयःशयने सार्धमायस्या योषिता स्वपेत् ।
गृहीत्वोत्कृत्य वृषणौ नैर्ऋत्यां वोत्सृजेत्तनुम्" ॥ इति ।

तथा अङ्गिराः—

"गुरुतल्पी शिलां तप्तामायसीं वा स्त्रियं विशेत् ।
उत्कृत्य वृषणौ वापि धारयेदञ्जलौ स्वयम् ॥
मरणायाथवा पद्भ्यां प्रव्रजेद्दिशमुत्तराम् ।
शरीरस्य विमोक्षेण मुच्यते कर्मणोऽशुभात्" ॥ इति ।

तथा वसिष्ठः—

"निष्कालको घृताभ्यक्तो गोमयेनाग्निना पादप्रभृत्यात्मानमवदाहयेत्, मरणात् पूतो भवति" इति ।

सूर्मी कार्ष्णायसी स्त्रीप्रतिकृतिः । के शिरसि अलकाः केशाः कालकाः । निर्गताः कालका यस्मादसौ निष्कालको मुण्डितमस्तकः । अत्र च तप्तलोहशिलाशयनं तप्तलोहस्त्रीप्रकृत्यालिङ्गनं च भिन्नं प्रायश्चित्तद्वयमिति प्रतिभाति । मन्वादिभिस्तथोक्तत्वादिति ।

योगिमते तु—तप्तयोषिदालिङ्गनमेव प्रधानम्। कुत्रत्येत्यधिकरणापेक्षायां तप्तायःशयने इति तत्रोत्तरपक्षेण सह वैकल्पिकं पक्षद्वयमित्येव युक्तम् । तत्र शिश्नकर्त्तनोत्तरं पृष्ठतोऽनिरीक्षमाण एव गमनं कुर्यात् । तदुक्तं शङ्खेन—"अनवेक्षमाणो व्रजेत्" इति । नैर्ऋतदिग्गमनगुरुदर्शनयोर्विकल्पः ।

तदुक्तम्—

"अथवा शिश्नवृषणावुत्कृत्य प्रतिगृह्य च ।
गुरोरभिमुखस्तिष्ठेत् पूतो भवति किल्बिषात् ॥
नैर्ऋतिं वा दिशं गच्छेदानिपातादजिह्मगः" ॥ इति ।
"आसामन्यतमां गच्छन् गुरुतल्पग उच्यते ।

शिश्नस्योत्कर्तनात्तत्र नान्यो दण्डो विधीयते" ॥

इति नारदस्मरणादयमेवात्र दण्ड उच्यते । गुरुशब्दोऽभिषेककृत्पितृवाची मुख्यवृत्त्या ।

"निषेकादीनि कर्माणि यः करोति यथाविधि ।
सम्भावयति चान्नेन स विप्रो गुरुरुच्यते" ॥

इति मनुस्मरणान्निषेकादिकर्तुर्जनकस्यैव गुरुत्वप्रतीतेः । अनेनैवाभिप्रायेण "स गुरुर्यः क्रियाः कृत्वा वेदमस्मै प्रयच्छति" इति योगीश्वरेण पितुरेव गुरुत्वमभिहितम् । आचार्योपाध्यायज्येष्ठभ्रातृ—ऋत्विक्भयरक्षकान्नदातॄणां गुरुत्वाभिधानं शब्दप्रवृत्तिनिमित्तभूतपूजार्हत्वमात्रेणोपपद्यते । अन्यथा एतेषामपि गुरुत्वे वसिष्ठाद्युक्तम्—"आचार्यादेस्तु भार्यासु गुरुतल्पव्रतं चरेत्" इत्यादिकमातिदेशिकप्रायश्चित्तविधानमनुपपन्नं स्यात् । "उत्पादकब्रह्मदात्रोर्गरीयान् ब्रह्मदः पिता" इत्यादिव्यासगौतमवचनानि पूजाविधिशेषतया स्तुत्यर्थतयोपपद्यन्ते । अतो निषेकादिकर्तुर्जनकस्यैव मुख्यगुरुत्वात् पितृपत्नीगमनमेव महापातकम् । गमनमत्र चरमधातुविसर्गपर्यन्तं विवक्षितम्, न तु सम्बन्धमात्रम् । अत एव रेतःसेकात् प्राङ्निवृत्तौ न महापातकतया व्यपदेशः । इदं च व्रतं जननीमकामतो गत्वा, तत्सपत्नीं सवर्णामुत्तमां च कामतो गत्वाऽनुष्ठेयम् ।

ननु—

"मातरं यदि वा गच्छेद् भगिनीं स्वसुतां तथा ।
एतास्तु मोहितो गत्वा त्रीणि कृच्छ्राणि सञ्चरेत् ॥
चान्द्रायणव्रतं कुर्याल्लिङ्गच्छेदेन शुध्यति" ॥

इति पाराशरीयं वचनं व्रतान्तरं विधत्ते तद्विरोध इति चेन्मैवम्। अत्र प्रायश्चित्तत्रयमुपदिश्यते। एकं हि प्राजापत्यत्रयरूपम्, द्वितीयं चान्द्रायणत्रयरूपम्, तृतीयं लिङ्गच्छेदरूपमिति। तच्च त्रितयं मैथुनप्रकारविषयतया सुयोज्यम्। तथा हि स्मरणकीर्तनकेलिप्रेक्षणगुह्यभाषणरूपपञ्चप्रकारापराधरूपमैथुनविषयता प्रथमस्य प्रतीयते, संकल्पाध्यवसायविषयता द्वितीयस्य, क्रियानिवृत्तिविषयता त्वतिमहत्त्वात्तृतीयस्येति।

ननु भवत्वेवं तथापि मोहित इत्युक्त्याऽकामकृतविषयता प्रतीयते। न च संकल्पाध्यवसायावकामकृतौ सम्भवतः। सत्यम्। महान्धकारादौ मातेयमित्यज्ञात्वा गमिष्याम्येनामिति संकल्पोऽध्यवसायश्च संभवति। अथवा मज्जननीति ज्ञानेऽपि शास्त्रादर्शनेन प्रत्यवायगौरवमज्ञात्वा प्रवृत्तस्य संकल्पोऽध्यवसायश्च सम्भवति। माता चात्र जननी, भगिनी सोदरस्य सुता सवर्णभार्योत्पन्ना च, कथं च तिसृणां साम्यमुच्यते। भगिन्यादावावृत्तिविषयतया साम्यस्य वक्तुं शक्यत्वात्। अतः सम्यगुक्तम्—"जननीमकामतो गत्वा" इदं प्रायश्चित्तमिति। न चेदं कामकारविषयमिति मन्तव्यम्। तत्र द्वादशवार्षिकषड्वार्षिकत्रैवार्षिकाणां वक्ष्यमाणत्वात्।

इदं च व्रतं मुख्यस्यैव पुत्रस्य। इतरेषां पुत्राणां पुत्रकार्यकर्तृत्वेऽप्यपुत्रत्वात्।

तदुक्तं मनुना—

"क्षेत्रजादीन् सुतानेतानेकादश यथोदितान्।
पुत्रप्रतिनिधीनाहुः क्रियायोगान्मनीषिणः॥" इति।

ततश्चेदं प्रायश्चित्तं जननीमकामतो गत्वा तत्सपत्नीं सवर्णां कामतो गत्वाऽनुष्ठेयमिति सिद्धम् ।

"विज्ञाय पितृभार्यां तु सवर्णां योऽधिगच्छति ।
जननीं चाप्यविज्ञाय नामृतः शुद्धिमाप्नुयात्" ॥

इति स्मरणात् कामतो जननीसकृद्गमने तु "निष्कालको घृताभ्यक्ताङ्गो गोमयाग्निनाऽऽपादप्रभृत्यात्मानमवदाहयेत्" इति वासिष्ठं द्रष्टव्यम् । तथा—अकामतोऽभ्यासे एतदेव व्रतं द्रष्टव्यम् । कामतोऽभ्यासेन जननीगमने कृतवपनस्य घृताभ्यक्ताङ्गस्यार्द्रगोमयाग्निना शरीरदाहः प्रायश्चित्तम् । गोमयाग्नित्वाविशेषेऽपीषदार्द्रत्वविशुष्कत्वादिभेदेन चिरक्षिप्रदाहिनो वधस्य भेदोपपत्तेः । ततश्च सकृत्कामतो जननीगमनेऽसकृत्कामतश्चेति द्वयं यथाक्रमम् ।

ननु गोमयाग्निवधे कथञ्चित्तारतम्येऽप्ययःशयनलिङ्गच्छेदजन्यवधयोः कथं तारतम्येन व्यवस्था ।

उच्यते । लिङ्गच्छेदवधो हि बहुप्रयाससाध्यः अयःशयनजन्योऽल्पप्रयाससाध्यः । तत्रोभयेच्छान्यतरेच्छादिभेदेन विषयो व्यवस्थाप्यते । सवर्णोत्तमवर्णपितृदारगमनेऽकामकृते द्वादशवार्षिकं तत्र व्रतम् ।

"अधःशायी जटाधारी पर्णमूलफलाशनः ।
एककालं समश्नन्वै वर्षे तु द्वादशे गते ॥
रुक्मस्तेयी सुरापश्च ब्रह्महा गुरुतल्पगः ।
व्रतेनैतेन शुध्यन्ति महापातकिनस्त्विमे" ॥ इति शङ्खस्मृतेः ।

सवर्णोत्तमवर्णापितृभार्यासु कामतः प्रवृत्तस्य रेतःसेकात्प्राङ् निवृत्तौ षड्वार्षिकम् । अकामस्तु त्रैवार्षिकम् । जनन्यां तु कामतः प्रवृत्तस्य रेतस्सेकात्प्राङ्निवृत्तौ द्वादशवार्षिकम् । अकामतः षड्वार्षिकमिति । हीनवर्णागुरुदारेषु रेतःसेकात्प्राङ् निवृत्तौ तप्तकृच्छ्रम् । ब्राह्मणीपुत्रस्य शूद्रजातीयगुरुभार्याभिगमने मतिपूर्वे वर्षत्रयं कृच्छ्रं प्रायश्चित्तम् । सवर्णाव्यभिचारिगुरुदारगमनेऽप्यबुद्धिपूर्वे वेदजपसहितं चान्द्रायणत्रयं वा कुर्यात् । अत्रैव कामतः प्रवृत्तौ वार्षिकं ब्रह्महत्याव्रतम् । अकामतः प्रवृत्तौ षाण्मासिकम् । मतिपूर्वे क्षत्रियागमने तु नववार्षिकम् ।

योगिना हि—"मातुः सपत्नीं भागिनीमाचार्यतनयां तथा" इति गुरुतल्पव्रतातिदेशान्नेदमातिदेशिकं सवर्णागुरुभार्यागमनविषयम् । तत्र कामतोऽकामतश्च मरणान्तिकद्वादशवार्षिकयोरभिधानात्क्षत्रियादिविषयतैव युक्ता । क्षत्रियायामेव कामतोऽभ्यासे मरणान्तिकम् ।

तदुक्तं कण्वेन—

"मत्या गत्वा पुनर्भार्यां गुरोः क्षत्रसुतां द्विजः ।
अण्डाभ्यां रहितं लिङ्गमुत्कृत्य स मृतः शुचिः" ॥ इति ।

वैश्यायां गुरुभार्यायां षड्वार्षिकम्, शूद्रायां गुरुभार्यायां त्रैवार्षिकमिति विवेकः ।

तथा च स्मृत्यन्तरम्—"ब्रह्मपुत्रस्य क्षत्रियायां मातरि गमने पादहान्या द्वादशवार्षिकम्, एवमेव सवर्णासु" इति । क्षत्रियायां नववार्षिकम्, वैश्यायां षड्वार्षिकम्, शूद्रायां त्रैवार्षिकमित्यर्थः ।

तथा क्षत्रियापुत्रस्य वैश्यायां मातरि नववार्षिकम्, शूद्रायां षड्वार्षिकमिति । वैश्यायां कामतोऽभ्यासे मरणान्तिकं व्रतम् ।

तदुक्तं लौगाक्षिणा—

"गुरुभार्यां तु यो वैश्यां गच्छेद्यस्तु पुनः पुनः ।
लिङ्गाग्रं छेदयित्वा तु ततः शुध्येत्स किल्बिषात्" ॥ इति ।

शूद्रायां कामतोऽभ्यासगमने द्वादशवार्षिकम् । तदुक्तं सुमन्तुना—

"पुनः शूद्रां गुरोर्गत्वा बुद्ध्या विप्रः समाहितः ।
ब्रह्मचर्यं स दुष्टात्मा संचरेद् द्वादशाब्दिकम्" ॥ इति ।

क्षत्रियायां गुरुभार्यायामबुद्धिपूर्वं गमने त्रैवार्षिकमष्टकालाशनं ज्ञेयम् । तदुक्तं यमेन—

"कालेऽष्टमे वा भुञ्जानो ब्रह्मचारी सदा व्रती ।
स्थानासनाभ्यां विहरंस्त्रिरह्नोऽभ्युपयन्नपः ।
अधःशायी त्रिभिर्वर्षैस्तदपोहेत पातकम्" ॥ इति ।

कामतोभ्यासेऽण्डमात्रकर्तनम् । तदुक्तं जातूकर्ण्येन—

"गुरोः क्षत्रसुतां भार्यां पुनर्गत्वा तु कामतः ।
अण्डमात्रं समुत्कृत्य शुध्येज्जीवन् मृतोऽपि वा" ॥ इति ।

वैश्यायामकामतो गमने त्र्यब्दं कृच्छ्रं चरेत् । तदुक्तं मनुना—

"गमने गुरुभार्यायाः पितृभार्यागमे तथा ।
अब्दत्रयमकामात्तु कृच्छ्रं नित्यं समाचरेत्" ॥ इति ।

अत्रैवाभ्यासेन मरणान्तिकं ब्रह्मचर्यम् । तदुक्तं हारीतेन—

"अभ्यस्य विप्रो वैश्यायां गुरोरज्ञानमोहितः ।
षडङ्गब्रह्मचर्यं च सञ्चरेद्यावदायुषम्" ॥ इति ।

षडङ्गानि च वाक्पाणयुपस्थचक्षुःश्रोत्रमनांसि । अत्रेयं व्यवस्था—क्षत्रियया पितृपत्न्या प्रोत्साहितस्य कामतः प्रवृत्तस्य विप्रस्य रेतःसेकात् प्राङ् निवृत्तौ मासत्रयं प्राजापत्याचरणम्। उभयेच्छातः प्रवृत्तौ मासत्रयमतिकृच्छ्राचरणम्। स्वयमेव प्रोत्साहनं कृत्वा प्रवृत्तस्य मासत्रयं कृच्छ्रानुष्ठानम् ।

"कृच्छ्रं चैवातिकृच्छ्रं च तथा कृच्छ्रातिकृच्छ्रकम् ।
चरेन्मासत्रयं विप्रः क्षत्रियागमने गुरोः" ॥

इति व्यासस्मरणात् ।

"चान्द्रायणं तप्तकृच्छ्रमतिकृच्छ्रं तथैव च ।
सकृद्गत्वा गुरोर्भार्यामज्ञानात् क्षत्रियां गुरोः" ॥

इति कण्वस्मरणादकामतः प्रवृत्तस्य रेतःसेकात्पूर्वं कृच्छ्रातिकृच्छ्रचान्द्रायणानि । अत्रापीयं विषयव्यवस्था—तया प्रोत्साहितस्यातिकृच्छ्रः, उभयेच्छातः प्रवृत्तस्य तप्तकृच्छ्रः, स्वेन प्रोत्साहितायां चान्द्रायणम्, इति । वैश्यायामकामतः प्रवृत्तस्य रेतस्सेकात् प्राङ् निवृत्तौ तप्तकृच्छ्रपराकसान्तपनानि द्रष्टव्यानि ।

"तप्तकृच्छ्रं पराकं च तथा सान्तपनं गुरोः ।
भार्यां वैश्यां सकृद्गत्वा बुद्ध्या मासं चरेद् द्विजः" ॥

इति स्मरणात् । अत्रोभयेच्छातः प्रवृत्तौ तप्तकृच्छ्रः । स्वेन प्रोत्साहितायां पराकः । तया प्रोत्साहने च सान्तपनम्। अत्रैवाकामतस्तदुभयेच्छातः प्रवृत्तस्य पञ्चसप्ताष्टरात्रं द्रष्टव्यम् ।

"पञ्चरात्रं तु नाश्नीयात् सप्ताष्टौ वा तथैव च ।
गुरोः शूद्रां सकृद्गत्वा बुद्ध्या विप्रः समाचरेत्" ॥ इति ।

तत्रैव कामतस्तदुभयस्येच्छातः प्रवृत्तौ प्राजापत्यं सान्तपनं सप्तरात्रोपवासात्मकं द्रष्टव्यम् । तदाह दीर्घतमाः—

"प्राजापत्यं सान्तपनं सप्तरात्रोपवासकम् ।
गुरोः शूद्रां सकृद् गत्वा चरेद्विप्रः समाहितः" ॥ इति ।

अनेनैव मार्गेणान्येषामपि वाक्यानां कल्पनीया व्यवस्था ।

स्त्रीविषये कात्यायनः—

"एष दोषश्च शुद्धिश्च पतितानामुदाहृतः ।
स्त्रीणामपि प्रसक्तानामेष एव विधिः स्मृतः ॥
छित्वा लिङ्गं वधस्तस्य सकामायाः स्त्रिया अपि" ॥ इति ।

अकामकृते द्वादशवार्षिकस्यार्द्धं ज्ञेयम् । स्त्रीणामर्द्धस्य विहितत्वात् । स्त्रीणां प्रायश्चित्ताचरणेऽरण्यवासादिकमसम्भवि ।

"वासो गृहान्तिके देय अन्नं वासः सरक्षणम्" ।

इति योगिस्मरणात् । प्रतिलोमजागमने संवर्तो विशेषमुक्तवान् ।

"शूद्रस्तु विप्रागमने गुरुतल्पव्रतं चरेत् ।
अज्ञानात् कामतो गत्वा प्राणान्तिकमिति स्थितिः" ॥ इति ।

अत्र वासिष्ठः—"वीरणैस्तृणविशेषैर्वेष्टयित्वा शूद्रमग्नौ प्रवेशयेत् । ब्राह्मण्याः शिरसि वपनं कृत्वा नग्नां गौरखरमारोप्य महापथमनुव्राजयेत्, पूता भवति । राजन्यस्य ब्राह्मणीगमने करवीरैर्वेष्टयित्वा राजन्यमग्नौ प्रवेश्य ब्राह्मण्याः शिरोवपनं कृत्वा नग्नां गौरखरमारोप्य महापथमनुसंव्राजयेत्, पूता भवति । वैश्यस्य ब्राह्मणीगमने करवीरैर्वेष्टयित्वा वैश्यमग्नौ प्रवेश्य ब्राह्मण्या वपनं कारयित्वा नग्नां श्वेत-

खरमारोप्य महापथमनुसंव्राजयेत्, शुद्धा स्यात्। एवं राजन्यायां वैश्यशूद्रयोरपि" इति।

योगी गुरुतल्पगातिदेशमाह—

"पितुः स्वसारं मातुश्च मातुलानीं स्नुषामपि।
मातुः सपत्नीं भगिनीमाचार्यतनयां तथा॥
आचार्यपत्नीं स्वसुतां गच्छंस्तु गुरुतल्पगः।
लिङ्गं छित्वा वधस्तस्य सकामाया अपि स्त्रियाः।
(१)अयमेव वधो दण्डः प्रायश्चित्तार्द्धमेव च"॥ इति।

नारद आह—

"माता मातृष्वसा श्वश्रूर्मातुलानी पितृष्वसा।
पितृव्यसखिशिष्यस्त्री भगिनी तत्सखी स्नुषा॥
दुहिताचार्यभार्या च सगोत्रा शरणागता।
राज्ञी प्रव्राजिता साध्वी धात्री वर्णोत्तमा च या॥
आसामन्यतमां गच्छन् गुरुतल्पग उच्यते"॥ इति।

लिङ्गच्छेद एव दण्डो नान्योऽतिदुष्टेषु। एकरात्रादूर्ध्वमकामतोऽभ्यासे नववार्षिकम्। कामतोऽत्यन्ताभ्यासे मरणान्तिकम्, इति विवेकः।

व्याघ्रः साधारणस्त्रीविषये विशेषमाह—

"जात्युक्तं पारदार्यं च कन्यादूषणमेव च।
साधारणस्त्रियां नास्ति गुरुतल्पत्वमेव च"॥ इति।

---

(१) पद्यार्धमिदं याज्ञवल्क्यस्मृतौ नास्ते (३।२३२-२३३)।

# अथ संसर्गिप्रायश्चित्तम् ।

यश्च महापातकिभिः संवत्सरं संविशति सोऽपि तत्समः । स च येन सह संसर्गं करोति तत्समं प्रायश्चित्तं कुर्यात् ।

"यो येन पतितेनैषां संसर्गं याति मानवः ।
स तस्यैव व्रतं कुर्यात्तत्संसर्गविशुद्धये" ॥ इति मनुस्मरणात् ।

"तत्संसर्गी तु पञ्चमः" इति साक्षान्महापातकित्वश्रुतेरतिदेशेऽपि द्वादशवार्षिकं कार्यम्, न मरणान्तिकम् । उपदेशादतिदेशस्याल्पत्वात् । तस्य च प्रायश्चित्तातिदेशस्यैव युक्तत्वात् । कथञ्चिन्महापातकित्वातिदेशेऽप्युक्तहेतोर्द्वादशवार्षिकस्यैव युक्तत्वादिति । इदं च व्रतं बुद्धिपूर्वविषयम् ।

"पतितेन सहोषित्वा जानन् संवत्सरं नरः ।
मिश्रितस्तेन सोऽब्दान्ते स्वयं च पतितो भवेत्" ॥

इति देवलस्मरणात् ।

अज्ञानतः संसर्ग उत्तरस्यां दिशि संहिताध्ययनं कुर्यात् । "पतितस्य तु योगे येभ्यः सकाशान्नाश उपलब्धस्तान् परित्यज्योदीचीं दिशं गत्वा संहिताध्ययनमधीयानः पूतो भवतीति विज्ञायते" इति वसिष्ठस्मरणात् ।

ततश्च यद्यपि ब्रह्महादिषु कामतो मरणान्तिकमुपदिष्टम् । तथापि संसर्गिणस्तन्नातिदिश्यते "स तस्यैव व्रतं कुर्यात्" इत्यादिषु व्रतस्यैवातिदेशात् । प्रायश्चित्तं चात्र वस्तुगत्या द्वादशाब्दमेव न मरणान्तिकम् । कामकृते संसर्गिणो द्वादशवार्षिकमेव, अकामस्तु षडब्दमिति ।

ननु "तत्संसर्गी तु पञ्चमः" इत्युक्तेः संसर्गिसंसर्गिणोऽपि पातित्यं स्यात् इति चेन्मैवम् । "तत्संसर्गी तु पञ्चमः" इति प्रकृतिविशेषपरामर्शिना तच्छब्देन ब्रह्महादिचतुःसंसर्गस्यैव पातित्यहेतुत्वेनैवोक्तत्वात् । संसर्गिसंसर्गिसंसर्गिणस्तु द्विजातिकर्महानिलक्षणं नास्ति यद्यपि तथापि पापमस्त्येव । "एवं त्रिभिरनिर्णिक्तैर्नार्यं किञ्चित्समाचरेत्" इति निषेधातिक्रमात् । तस्य पादहीनं व्रतम् । तदुक्तं व्यासेन—

"यो येन संविशेद्वर्षं सोऽपि तत्समतामियात्" ॥ इति ।

"पादहीनं चरेत्सोऽपि तस्य तस्य व्रतं चरेत्"

इति चतुर्थपञ्चमयोरपि कामतः संसर्गिणोरर्द्धहीनं त्रिपादोनं च द्रष्टव्यम् ।

अथ संसर्गप्रकारः । तत्र बृहस्पतिः—

"एकाशय्यासनं पङ्क्तिभाण्डपङ्क्त्यन्नमिश्रणम् ।
याजनाध्यापने योनिस्तथा च सहभोजनम् ॥
नवधा सङ्करः प्रोक्तो न कर्तव्योऽधमैः सह" ॥ इति ।

एकशय्या, एकासनम् , एकपङ्क्तिभोजनम् , एकभाण्डपचनम् , अन्नेन मिश्रणं संसर्गः, तदीयान्नभोजनमिति यावत् , याजनं पतितस्य स्वस्य वा तेन, एवमुत्तरत्रापि सहभोजनमेकपात्रभोजनम् ।

अत्र देवलोक्तो विशेषः—

"संलापस्पर्शनिःश्वाससहयानाशनासनात् ।
याजनाध्यापनाद्यौनात् पापं संक्रमते नृणाम्" ॥ इति ।

बृहद्विष्णुना कालविशेषोऽभिहितः—"संवत्सरेण पतति पतितेन सहाचरन्, एकयानभोजनासनशयनीयैर्यौनस्रौवमुख्यैस्तत्सम्बन्धैः सद्य एव पतति" इति ।

अयमत्रान्वयः । एकयानादिभिः पतितेन सहाचरन् पतितः स्यादिति । संलापादीनां यानादिचतुष्टयेनानुषङ्गितया समुच्चितानां पतनहेतुत्वम् । अतः संलापादिरहिते सहयाजनादिचतुष्टये कृते पञ्चमभागोनं द्वादशवार्षिकं प्रायश्चित्तं तत्सहिते तु पूर्णमेवेति तत्त्वम् । आसनादीनां प्रत्येकं पातित्यहेतुत्वाभावेऽपि पापहेतुत्वमपरिहार्यम् ।

"आसनाच्छयनाद्यौनात्सम्भाषात्सहभोजनात् ।
संक्रामन्तीह पापानि तैलबिन्दुरिवाम्भसि" ॥

इति पराशरस्मरणात् ।

योनिसम्बन्धो विवाहादिः । स्रौवं याजनम् । मुख्यो मुखभवस्तेनाध्यापनम् । स्रौवमुख्यैरिति द्वन्द्वनिर्देशेऽपि प्रत्येकमेव तेषां पतनहेतुत्वम् ।

तदुक्तं सुमन्तुना—"यः पतितैः सह यौनमुख्यस्रौवानां सम्बन्धानामन्यतमसम्बन्धं कुर्यात् तस्याप्येतदेव प्रायश्चित्तम्" इति ।

संवत्सरान्न्यूनसंसर्गे कामतः कृते पराशरीया व्यवस्था ।

तथा च पराशरः—

"संसर्गमाचरन् विप्रः पतितादिषु कामतः ।
पञ्चाहं वा दशाहं वा द्वादशाहमथापि वा ॥
मासार्द्धं मासमेकं वा मासत्रयमथापि वा ।
अब्दार्द्धमब्दमेकं वा भवेदूर्ध्वं तु तत्समः" ॥ इति ।

तत्र प्रायश्चित्तम्—प्रथमपक्षे त्रिरात्रम्, द्वितीये कृच्छ्रम्, तृतीये सान्तपनकृच्छ्रम्, चतुर्थे दशरात्रम्, पञ्चमे पराकम्, षष्ठे चान्द्रायणम्, सप्तमे चान्द्रद्वयम्, अष्टमे पक्षे षाण्मासिकम्। कामतश्चेत्कृतं पञ्चाहे कृच्छ्रम्, अर्द्धमासे पराकम्, मासे चान्द्रम्, मासत्रये कृच्छ्रचान्द्रायणम्, षाण्मासिकसंसर्गेऽब्दार्द्धकृच्छ्रम्, आब्दिकसंसर्गेऽब्दं चान्द्रायणम्, आब्दिके किञ्चिन्न्यून इति द्रष्टव्यम्। पूर्णे वत्सरे द्वादशवार्षिकविधानात्।

"षाण्मासिके तु संसर्गे याजनाध्यापनाद् द्विजः।
एकत्रासनशय्याभिः प्रायश्चित्तार्द्धमाचरेत्"॥

इति बृहस्पतिवचनेनाकामतः पञ्चमहायागादियाजनेऽङ्गाध्यापने दुहितृभगिनीव्यतिरिक्ते च योनिसम्बन्धे षण्मासपातित्यकथनं द्रष्टव्यम्। प्रकृष्टयाजनादिभिः सद्यः पतनस्योक्तत्वात्। दुहितृभगिनीस्नुषागाम्यतिपातकिसंसर्गिणां कामतो नवाब्दं ज्ञेयम्। अकामतः सार्द्धचतुर्वार्षिकं द्रष्टव्यम्। सखिपितृव्यदारादिगामिपातकिसंसर्गिणां कामतः षडब्दम्। अकामतस्त्र्यब्दम्। उपपातक्यादिसंसर्गिणामपि कामतस्त्रैमासिकम्। अकामतोर्द्धऽमित्युक्तन्यायादूह्यम्।

स्त्रीविषये शौनकेनोक्तो विशेषः—"पुरुषस्य यानि पतननिमित्तानि स्त्रीणामपि तान्येव। ब्राह्मण्यो हीनवर्णसेवायामधिकं पतन्ति। ततश्च स्त्रीबालवृद्धातुराणां कामतः संसर्गेऽर्धं प्रायश्चित्तम्। अकामतश्चतुर्थांशः। अनुपनीतस्य कामतश्चतुर्थभागः पादः। अकामतस्तदर्द्धमिति व्यवस्था।

योनिसम्बन्धे हारीतोक्तो विशेषः—"पतितस्य कुमारीं विवस्त्रामहोरात्रमुपोषितां प्रातः शुक्लेन वाससा छादितां नाहमेतेषां न ममैते, इत्युच्चैरभिदधानां तीर्थे स्वगृहे वोद्वहेत्" इति वाचनात् स्वयमेव स्वीकुर्यात् । न पुनः पतितहस्तात् गृह्णीयात् । पतितहस्ताद् ग्रहणेनात्र योनिसम्बन्धनिषेधः । पतितानामपत्यविषये वसिष्ठोक्तो विशेषः—"पतितेनोत्पन्नः पतितो भवत्यन्यत्र स्त्रियाः । सा हि परगामिनी, तामरिक्थामुपेयात्" इति ।

इति संसर्गिप्रायश्चित्तम् ।

## अथ प्रतिलोमवधप्रायश्चित्तम् ।

अथ निषिद्धकर्मोत्पन्नप्रतिलोमवधे प्रायश्चित्तमभिधीयते । तत्र सूतमागधादयः प्रतिलोमोत्पन्नाः । तेषां प्रत्येकं कामतो हनने चान्द्रायणं कार्यम् । "सर्वेषामपकृष्टानां वधे प्रत्येकं चान्द्रायणम्" इति शङ्खस्मरणात् । अकामतश्चेत् पराकम् ।

"सर्वान्त्यजातागमने भोजने सम्प्रमारणे ।
पराकेण विशुद्धिः स्यादित्याङ्गिरसभाषितम्" ॥

इत्याङ्गिरःस्मरणात् । तत्र व्यवस्था—अकामतस्तु सूतवधे पराकः । वैदेहवधे पादोनः । चाण्डालवधे द्विपदः । मागधे पादोनः पराकः । क्षत्तरि त्रिपादः । आयोगवे च पादद्वयम् । अनेनैव प्रकारेण चान्द्रायणेऽपि तारतम्यं कल्प्यते ।

"प्रतिलोमप्रसूतानां स्त्रीणामर्द्धं वधे स्मृतः ।
अन्तरप्रसवानां च सूतादीनां चतुर्द्विषट्" ॥

इति ब्रह्मवैवर्त्तवचनमावृत्तिविषयम् । अत्र सूतवधे षण्मासाः । वैदेहवधे चत्वारः । चाण्डालवधे द्वौ, इति । तथाऽन्त्यजवधे चत्वारः । अन्तरे द्वैमासिकम् । आयोगवे मासिकमिति व्यवस्था ।

शूद्रस्य स्त्रीणां च जपादिष्वनधिकारेऽपि द्वादशवार्षिकादि-कालसम्पाद्यव्रतादिना शुद्धिः ।

"अथ शूद्रं समासाद्य सदा धर्मपथे स्थितम् ।
प्रायश्चित्तं प्रदातव्यं जपहोमादिकं विना" ॥

इति स्मरणात् जपादिरहितमेव व्रतानुष्ठानमिति स्त्रीशूद्रयोः प्रतिलोमजानां च त्रैवर्णिकव्रताधिकार इति युज्यते । इत्यलम् ।

महापातकान्यतिपातकमर्यादयातिदिष्टानि तत्प्रायश्चित्तान्यभि-धाय तत्समान्यनुपातकपर्यायाणि तत्प्रायश्चित्तानि चाभिधीयन्ते ।

## अथानुपातकप्रायश्चित्तम् ।

तत्र योगी—

"गुरूणामभ्यधिक्षेपो निन्दा वेदस्य विस्मृतिः ।
ब्रह्महत्यासमं ज्ञेयमधीतस्य च नाशनम्" ॥ इति ।

पित्रादिगुरूणामभ्यधिक्षेपोऽनृताभिशंसनम् । नास्तिक्यादेव निन्दनं वेदनिन्दा । अधीतवेदस्यासच्छास्त्रविनोदेनालस्यादिना वा नाशनं वेदविस्मृतिः । सुहृन्मित्रब्राह्मणवधः । समुत्कर्षेऽनृतम् । राजगामि पैशून्यम् । गुर्वलीकनिर्बन्धश्च । इमानि ब्रह्महत्या-समानि । अत्र पादोनं व्रतं कल्प्यम् । अत्र जातिशक्तिवयोवस्था-देशापेक्षया तारतम्यं मृग्यम् ।

अथ सुरापानसमानि निषिद्धभक्षणादीनि । तथा सुवर्णस्तेयसमान्यश्वस्त्रीमनुष्यहरणादीनि । गुरुतल्पसमानि सखिभार्याकुमार्यन्त्यजासगोत्रसुतस्त्रीगमनप्रभृतीनि(१)। अत्र नवाब्दं षडब्दं वा व्रतं कार्यम् ।

इति महापातकसमप्रायश्चित्तम् ।

## अथोपपातकप्रायश्चित्तम् ।

तत्र गोवधप्रायश्चित्तमभिधीयते । अत्र प्रायश्चित्तचतुष्टयम् । तत्र प्रथमम्—अज्ञानात् क्षत्रियसम्बन्धिगोमात्रवधे पञ्चगव्यं मासं पिबेत् । गोष्ठेशयो गोप्रदाता चेति । द्वितीयम्—शूद्रस्वामिकगोवधे मासं प्राजापत्यानुष्ठानम् । तृतीयम्—अज्ञानाद्वैश्यसम्बन्धिगोवधे मासमतिकृच्छ्रानुष्ठानम् । चतुर्थम्—अज्ञानाज्जातिमात्रब्राह्मणसम्बन्धिगोवधे त्रिरात्रमुपोष्य वृषभैकादशका गा दद्यादिति ।

तत्र षडुपवासा एकं प्राजापत्यम् । प्राजापत्यप्रत्याम्नाये गौरेका देया । अशनपरित्यागेन मासं पञ्चगव्याशनम् । तदन्तदीयमानैका गौः । ततश्च वृषभैकादशगोदानसहितत्रिरात्रोपवासः । ब्राह्मणगोवधप्रायश्चित्तापेक्षया षड्धेनुरूपप्रायश्चित्तस्य न्यूनताऽवगन्तव्या । एतस्मादपि वैश्यगोवधप्रायश्चित्तस्य न्यूनत्वम् । एतस्मादपि शूद्रगोवधप्रायश्चित्तस्य न्यूनत्वम् । ततश्च ब्राह्मणगोवधे दश गाव एकोऽनड्वान् । क्षत्रियगोवधे षड् गावः । वैश्यगोवधे चतस्रो

---

(१) एतेषां प्रायश्चित्तानि पारदार्यप्रकरणे विस्तरशो विशदीकरिष्यन्ते ।

धेनवः किञ्चिदधिकाः । शूद्रधेनुवधे किञ्चिदधिकं धेनुद्वयं भवतीति विवेकः ।

अथ साक्षात्कर्तानुग्राहकप्रयोजकानुमन्तृपूक्तक्रमेण गुरुलघुभावेन प्रायश्चित्तचतुष्टयं योज्यम् । तदुक्तम्—

"पञ्चगव्यं पिबेत् गोघ्नो मासमासीत संयतः ।
गोष्ठेशयो गोऽनुगामी गोप्रदानेन शुध्यति ॥
कृच्छ्रं चैवातिकृच्छ्रं च चरेद्वापि समाहितः ।
दद्यात्त्रिरात्रं चोपोष्य वृषभैकादशास्तु गाः" ॥ इति ।

इदं सामान्यतो विहितं व्रतं कामकारकृते द्विगुणं ज्ञेयम् । "विहितं यदकामानां कामात्तद् द्विगुणं भवेत्" इत्युक्तत्वात् । पुष्टितारुण्यादिरहितगोवधेऽर्द्धं व्रतं कार्यम् ।

"अतिबालामतिकृशामतिवृद्धां च रोगिणीम् ।
हत्वा पूर्वविधानेन चरेदर्द्धं व्रतं द्विजः" ॥ इति स्मरणात् ।

पुष्टितारुण्यादिविशिष्टगोवधे—

"अक्षारलवणं रूक्षं षष्ठे कालेऽस्य भोजनम् ।
गोमतीं वा जपेद्विद्यामोङ्कारं वेदमेव च ॥
व्रतं च धारयेद्दण्डं समन्त्रां चैवमोषधीम्" ।

इत्यङ्गिरसोक्तं द्रष्टव्यम् । गोमतीविद्या तु यमेनोक्ता द्रष्टव्या ।

"गावः सुरभयो नित्यं गावो गुग्गुलगन्धिकाः ।
गावः प्रतिष्ठा भूतानां गावः स्वस्त्ययनं महत् ॥
अन्नमेव परं गावो देवानां हविरुत्तमम् ।
पावनं सर्वभूतानां रक्षन्ति च वहन्ति च ॥

हविषा मन्त्रपूतेन तर्पयन्त्यमरान् दिवि ।
ऋषीणामग्निहोत्रेषु गावो होमप्रयोजकाः ॥
सर्वेषामेव भूतानां गावः शरणमुत्तमम् ।
गावः परं पवित्रं च गावो मङ्गलमुत्तमम् ।
गावः स्वर्गस्य सोपानं गावो धन्याः सनातनाः ॥
नमो गोभ्यः श्रीमतीभ्यः सौरभेयीभ्य एव च ।
नमो ब्रह्मसुताभ्यश्च पवित्राभ्यो नमो नमः ॥
ब्राह्मणाश्चैव गावश्च कुलमेकं द्विधा कृतम् ॥
एकत्र मन्त्रास्तिष्ठन्ति हविरेकत्र तिष्ठति" ॥ इति ।

अकामतः सवनस्थश्रोत्रियगोवधे—"गां चेद्धन्यात्तु तस्याश्चर्मणार्द्रेण वेष्टितः षण्मासान् कृच्छ्रतप्तकृच्छ्रान्वानुतिष्ठेत् । वृषभवेहद्धेनू दद्यात्" इति वचनात् षाण्मासिकं कृच्छ्रतप्तकृच्छ्रानुष्ठानम् । वेहद् गर्भघातिनी गौः । ततश्च यः पुङ्गवं हन्यात् स वृषभं दद्यात्, यः स्त्रीगां स वेहतं दद्यादिति भावः । अत्रैव कामकारकृते कात्यायनीयं त्रैवार्षिकम् । तथाहि—

"गोघ्नस्तच्चर्मसंवीतो वसेद् गोष्ठेऽथवा पुनः ।
गाश्चानुगच्छेत् सततं मौञ्जीवीरासनादिभिः ॥
वर्षशीतातपक्लेशवह्निपङ्कभयार्दितः ।
मोक्षयेत्सर्वयत्नेन पूयते वत्सरैस्त्रिभिः" ॥ इति ।

यदपि शङ्खेन त्रैवार्षिकं विहितं तदपि कात्यायनीयसमानमेव ।

"पादं तु शूद्रहत्यायामुदक्यागमने तथा ।
गोवधे च तथा कुर्यात्परस्त्रीगमने तथा" ॥ इति ।

सवनस्थश्रोत्रियातिबहलकुटुम्बिब्राह्मणसम्बन्धिनीं कपिलां कर्माङ्गभूतां गर्भिणीं बहुलक्षीरतरुणिमादिगुणशालिनीं गां निर्गुणो धनवान् खड्गादिना हन्यात् तदा गोसहस्रयुतं द्वैमासिकं कुर्यात्।

तदाह यमः—

"गोसहस्रं शतं वापि दद्यात् सुचरितव्रतः।
अविद्यमाने सर्वस्वं वेदविद्भ्यो नियोजयेत्" ॥ इति।

गुरुः—

"गर्भिणीं कपिलां दोग्ध्रीं होमधेनुं च सुव्रताम्।
खड्गादिना घातयित्वा द्विगुणं व्रतमाचरेत्" ॥ इति।

गोशतयुतं द्वैमासिकं तु गोगर्भिणीबालधेनुविषयं द्रष्टव्यम्।

यमः—

"काष्ठलोष्टाश्मभिर्गावः शस्त्रैर्वा निहता यदि।
प्रायश्चित्तं कथं तत्र शस्त्रे शस्त्रे विधीयते ॥
काष्ठे सान्तपनं कुर्यात्प्राजापत्यं तु लोष्टके।
तप्तकृच्छ्रं तु पाषाणे शस्त्रे चाप्यतिकृच्छ्रकम् ॥
प्रायश्चित्ते ततश्चीर्णे कुर्याद् ब्राह्मणभोजनम्।
त्रिंशद्गा वृषभश्चैकं दद्यात्तेभ्यश्च दक्षिणाम्" ॥ इति।

इदं च पूर्वोक्तसहस्रशतदानत्रैवार्षिकादिव्रतविषयेष्वेव। काष्ठादिसाधनविशेषजनितवधनिमित्तं सान्तपनादिपूर्वकत्वप्रतिपादनपरम्। न तु निरपेक्षम्। अत्रैव विशेषो बृहत्प्रचेतसोक्तः—

"एकवर्षे हते वत्से कृच्छ्रपादो विधीयते।
अबुद्धिपूर्वे पुंसः स्यात् द्विपादस्तु द्विहायने ॥

त्रिहायने त्रिपादः स्यात् प्राजापत्यमतः परम्" इति ।

गर्भिणीवधे यदा गर्भोऽपि निहतो भवति तदा प्रतिनिमित्तं नैमितिकावृत्तेर्न्याय्यत्वाद् द्विगुणव्रते प्राप्ते षट्त्रिंशन्मते विशेष उक्तः—

"पाद उत्पन्नमात्रे तु द्वौ पादौ दृढतां गते ।
पादोनं व्रतमुद्दिष्टं हत्वा गर्भमचेतनम् ॥
अङ्गप्रत्यङ्गसंपूर्णे गर्भे चेतःसमन्विते ।
द्विगुणं गोव्रतं कुर्यादेष गोघ्नस्य निष्कृतिः" ॥ इति ।

बहुकर्तृकहनने संवर्तः—

"एका चेद् बहुभिः काचिद् दैवाद्व्यापादिता क्वचित् ।
पादं पादं च हत्यायाश्चरेयुस्ते पृथक् पृथक्" ॥ इति ।

एकेत्युपलक्षणम् । दैवादज्ञानाद्वा बहुभिरेकस्या द्वयोर्बहूनां च वधे यादृग्विधगोहत्यायां यद्व्रतमुपदिष्टं तत्पादं प्रत्येकं कुर्युरेकस्या वधे । द्वयोस्तु पादद्वयम् । बहूनां पादत्रयं कल्प्यमिति ।

कामकारे तु द्विगुणं वेदितव्यम् । एकेनैव रोधनादिना बहूनां च वधे संवर्त्तापस्तम्बोक्तो विशेषः—

"व्यापन्नानां बहूनां तु रोधने बन्धनेऽपि वा ।
भिषङ्मिथ्योपचारे च द्विगुणं गोव्रतं चरेत्" ॥ इति ।

बहुष्वपि व्यापन्नेषु न प्रतिनिमित्तं नैमित्तिकानुष्ठानम् । नापि तन्त्रेण । किन्तु वचनबालाद् द्विगुणमेव कर्तव्यम् । तथा भिषगपि विरुद्धौषधदानेनैकस्या अप्यज्ञानाद्वधे द्विगुणमेव कुर्यात् । वैद्यव्यतिरिक्तस्य उपकाराद्दत्तस्य—

"औषधं लवणं चैव पुण्यार्थमपि भोजनम् ।

अतिरिक्तं न दातव्यं काले स्वल्पं तु दापयेत् ॥
अतिरिक्ते विपत्तिश्चेत् कृच्छ्रपादो विधीयते" ।

इति व्यासोक्तं द्रष्टव्यम् ।

"पादमेकं चरेद्रोधे द्वौ पादौ बन्धने चरेत् ।
याजने पादहीनं स्यात् चरेत्सर्वं निपातने" ॥

इत्यापस्तम्बवचनं तु व्यवहितव्यापारिणोऽपि निमित्तकर्तुर्विज्ञेयम्, न साक्षात्कर्तुः । व्यासेनैव साक्षात् कर्तुर्निमित्तिनश्च भेद उक्तः-

"पाषाणैर्लगुडैर्वापि शस्त्रेणान्येन वा बलात् ।
निपातयन्ति ये गास्तु कृत्स्नं कुर्युर्व्रतं हि ते ॥
तथैव पादजङ्घोरुपार्श्वग्रीवाङ्घ्रिमोटनैः" ॥ इति ।

तत्र वधनिमित्तरोधस्य रूपमुक्तम्—

"गोवाटे वा गृहे वापि दुर्गेष्वप्यसमस्थले ।
नदीष्वथ समुद्रेषु त्वन्येषु च नदीमुखे ॥
दग्धदेशे मृता गावः स्तम्भनाद्रोध उच्यते ।
योक्त्रदामकदोरैश्च कण्ठाभरणभूषणैः ॥
गृहे वापि वने वापि बद्धः स्याद् गौर्मृतो यदि ॥
तदेव बन्धनं विद्यात् कामाकामकृतं च तत्" ॥ इति ।

"गवां बन्धनयोक्त्रैस्तु भवेन्मृत्युरकामतः ।
अकामकृतपापस्य प्राजापत्यं विनिर्दिशेत् ॥
प्रायश्चित्ते ततश्चीर्णे कुर्याद् ब्राह्मणभोजनम् ।
अनडुत्सहितां गां च दद्याद्विप्राय दक्षिणाम्" ॥ इति ॥

आपस्तम्बः—"अतिदाहातिवाहाभ्यां नासिकोच्छेदने तथा ।
नदीपर्वतसंरोधे मृता पादोनमाचरेत्" ॥ इति ।

लद्ममात्रोपयोगिनि दाहे न दोषः । तथा च पराशरः—

"अन्यत्राङ्कनलद्मभ्यां वाहने मोचनेऽपि वा ।
सायं संगोपनार्थं च न दुष्येद्रोधबन्धनम्" ॥ इति ।

अङ्कनं स्थिरचिह्नकरणम् ।

"न नालिकेरैर्न च शाणवालैर्न वापि मौञ्जैर्न च वल्कशृङ्खलैः ।
एतैस्तु गावो न च बन्धनीया बद्ध्वानुतिष्ठेत्परशुं गृहीत्वा" ॥
"कुशैः काशैश्च बध्नीयात् स्थाने दोषविवर्जिते" ॥ इति ।

"घण्टाभरणदोषेण विपत्तिर्यत्र गोर्भवेत् ।
कृच्छ्रार्द्धं तु भवेत्तत्र भूषणार्थं हि तत्स्मृतम् ॥
अतिदाहातिशमने सङ्घाते चैव योजने ।
बद्ध्वा शृङ्खलपाशैश्च मृता पादोनमाचरेत् ॥
जलौघपल्वले मग्ना मेघविद्युद्धताऽपि वा ।
श्वभ्रे वा पतिताऽकस्मात् श्वापदेनापि भक्षिता ॥
प्राजापत्यं चरेत् कृच्छ्रं गोस्वामी व्रतमुत्तमम् ।
शीतवातहता वा स्यादुद्बन्धनमृतापि वा ॥
शून्यागार उपेक्षायां प्राजापत्यं विनिर्दिशेत् ।

इदं कार्यान्तरविरहेऽप्युपेक्षायां वेदितव्यम् । कार्यान्तरव्यग्रतयो-पेक्षायामर्द्धम् । तथोक्तं विष्णुना—

"पल्वलौघमृगव्याघ्रश्वापदानां निपातने ।
श्वभ्रप्रपातसर्पाद्यैर्मृते कृच्छ्रार्द्धमाचरेत् ॥

अपालत्वात्तु कृच्छ्रः स्यात् शून्यागार उपप्लवे" । इति ।

यदा स्वामिनोऽपराधस्तदा तस्यैव व्रतम् । गोपालापराधे गोपालस्येति भावः । क्वचित्संवर्तेन दोषाभाव उक्तः—

"यन्त्रणे गोश्चिकित्सार्थे मूढगर्भविमोचने ।
यत्ने कृते विपत्तिः स्यान्न स पापेन लिप्यते ॥
दाहच्छेदशिराच्छेदप्रयोगैरुपकुर्वता ।
द्विजानां गोहितार्थाय प्रायश्चित्तं न विद्यते ॥
औषधं स्नेहमाहारं ददद्गोर्ब्राह्मणो द्विजः ।
दीयमाने विपत्तिश्चेन्न स पापेन लिप्यते" ॥ इति ।

यमः—"निशि बद्ध्वा निरुद्धेषु व्याघ्रसर्पहतेषु च ।
अग्निविद्युत्प्रपन्नेषु प्रायश्चित्तं न विद्यते ॥
अस्थिभङ्गं गवां कृत्वा कटिभङ्गं तथैव च ।
यदि जीवति षण्मासान् प्रायश्चित्तं न विद्यते" ॥

अस्थिभङ्गे प्रायश्चित्तं विद्यत एव ।

"अस्थिभङ्गं गवां कृत्वा लाङ्गूलच्छेदनं तथा ।
पाटनं दन्तशृङ्गाणां मासार्द्धं तु यवान् पिबेत्" ॥ इति ।
ग्रामाघाते शरौघेन वेश्मभङ्गनिपातने ।
अतिवृष्टिहतानां तु प्रायश्चित्तं न विद्यते ॥
कूपे खाते च धर्मार्थे गृहदाहे च या मृता ।
ग्रामदाहे तथा घोरे प्रायश्चित्तं न विद्यते" ॥

इदं गोस्वामिनो व्यापन्नगोसदृशीं गां दत्त्वैव कार्यम् ।

"प्रमापणे प्राणभृतां दद्यात्तत्प्रतिरूपकम् ।

तस्यानुरूपं मूल्यं वा दद्यादित्यब्रवीन्मनुः" ॥ इति स्मरणात् ।

तथोक्तं मनुना—

"यो यस्य हिंस्यात् द्रव्याणि ज्ञानतोऽज्ञानतोऽपि वा ।

स तस्योत्पादयेत्तुष्टिं राज्ञे दद्याच्च तत्समम्" ॥ इति ।

यदुक्तं प्रायश्चित्तं तद्धन्तुर्ब्राह्मणस्यैव द्रष्टव्यम् । पादोनं क्षत्रिये वैश्ये त्वर्द्धं शूद्रे पादमिति ।

"विप्रे तु सकलं ज्ञेयं पादोनं क्षत्रिये स्मृतम् ।

वैश्येऽर्द्धं पाद एकस्तुः शूद्रजातिषु शस्यते" ॥

इति विष्णुःस्मरणात् ।

तस्मात् स्त्रीशूद्रबालानां त्वर्द्धम्, अनुपनीतबालस्य पाद इति ।

ननु—अङ्गिरोवचस्तु "पर्षद्या ब्राह्मणानां स्यात्"इत्यादि–ब्रह्मक्षत्रियविट्शूद्राणामुत्तरोत्तरं व्रताधिक्यमाचष्टे ततः कथमत्र वैपरीत्यम् । सत्यम् । भवति वाक्यमिदं तु महापातकविषयम् । तत्प्रातिलोम्येन वाग्दण्डपारुष्यादिविषयं ज्ञातव्यम् । अनुग्राहकादीनां पादोनादि बालस्त्रीवृद्धानामर्द्धमित्यादि सर्वं योज्यम् ।

वपनविषये संवर्त्तः—

"पादेऽङ्गरोमवपनं द्विपादे श्मश्रुणोऽपि च ।

त्रिपादे तु शिखावर्जं सशिखं तु निपातने" ॥ इति ।

स्त्रीविषये—"वपनं नैव नारीणां नानुव्रज्या जपादिकम् ।

न गोष्ठे शयनं तासां न वसीरन्गवाजिनम् ।

सर्वान् केशान् समुद्धृत्य छेदयेदङ्गुलद्वयम् ।

सर्वत्रैवं हि नारीणां शिरसो मुण्डनं स्मृतम्" ॥ इति ।

इति गोवधप्रायश्चित्तम् ।

# अथ व्रात्यताप्रायश्चित्तम् ।

तत्र यमः—

"सावित्री पतिता यस्य दशवर्षाणि पञ्च च ।
सशिखं वपनं कृत्वा व्रतं कुर्यात्समाहितः ॥
एकविंशतिरात्रं वा पिबेत्प्रसृतियावकम् ।
हविष्यं भोजयेच्चैव ब्राह्मणान् पञ्च सप्त वा ॥
ततो यावकशुद्धस्य तस्योपनयनं स्मृतम्" ॥ इति ।

इदमुपनेत्राद्यभावेऽतिकालातिक्रमे च द्रष्टव्यम् । तथा—

"उपपातकशुद्धिः स्यादेवं चान्द्रायणेन वा ।
पयसा वापि मासेन पराकेणाथवा पुनः ॥" इति ।

एतच्च व्रतजातमकामकारे शक्त्यपेक्षया विकल्पितं द्रष्टव्यम् । कामकारे तु त्रैमासिकम् ।

"एतदेव व्रतं कुर्युरुपपातकिनो नराः ।
अवकीर्णविशुद्ध्यर्थं चान्द्रायणमथापि वा" ॥

इति मनुस्मरणात् ।

उक्तकालादूर्ध्वमपि कियत्कालातिक्रमेऽनापदि च वशिष्ठाऽभिहितं ज्ञेयम् । तथा हि—"पतितसावित्रीक उद्दालकं व्रतं चरेत्" इति ।

उद्दालकं व्रतं चैवमनुष्ठेयम्—"द्वौ मासौ यावकेन वर्तयेत् , मासं पयसा, पक्षमामिक्षया, अष्टरात्रं घृतेन, षड्रात्रमयाचितेन, त्रिरात्रमब्भक्षः, अहोरात्रमुपवासश्च । अश्वमेधावभृथं गच्छेत् । व्रात्य-

स्तोमेन वा यजेत" इति । अत्र व्यवस्था—यस्योपनेत्राद्यभावेन तत्कालातिक्रमः, तस्य याज्ञवल्कीयान्यतमं शक्त्यपेक्षया कल्प्यम् । अनापद्यतिक्रमे तु मानवं त्रैमासिकं कल्प्यम् । अत्रैव पञ्चदशवर्षादूर्ध्वमपि कियत्कालातिक्रमे तूद्दालकव्रतं व्रात्यस्तोमो वा ।

यस्य पित्रादयोऽप्यनुपनीता आपस्तम्बोक्तो विशेषस्तत्र द्रष्टव्यः— "यस्य पितृपितामहावनुपनीतौ स्यातां तस्य संवत्सरं त्रैविद्यं ब्रह्मचर्यं यत्र प्रपितामहादीनां तु न तत्पर्यन्तमुपनयनं तस्य द्वादशवार्षिकाणि त्रैविद्यं ब्रह्मचर्यम्,, इति ।

"तैः सह भोजनं विवाहं च वर्जयेत् । तेषामिच्छतां प्रायश्चित्तम् । यथा प्रथमेऽतिक्रमे ऋतुरेवं संवत्सरः" इति च ।

तथा च विष्णुः—"अथोपनयनम्, तत उदकोपस्पर्शः, प्रतिपुरुषसंख्यया संवत्सरा यावन्तोऽपनीताः स्युः, सप्तभिः पावमानीभिः 'यदन्ति यच्च दूरक' इत्येताभिर्यजुःपवित्रेण सामपवित्रेणाङ्गिरसेनेति, अथ वा व्याहृतिभिरेव, स्वाध्यायो यस्य प्रपितामहादीनां न स्मर्यत उपनयने ते श्मशानसंस्तुताः, तेषामभ्यागमनं भोजनं विवाहं च वर्जयेत् तेषां द्वादश वर्षाणि त्रैविद्यकं व्रतं चरेत्" । इति ।

प्रौढश्रीद्विजराजवंशतिलकालङ्कारहीरः प्रभु—
र्भारद्वाजकुलानुगः प्रथमया यः शाखयालङ्कृतः ।
श्रीमद्वल्लभसूनुरात्मनिरतः सत्सम्मतः प्रक्रिया-
सारेऽस्मिन व्रतचर्यसंज्ञक इह श्रीमान् दलाधीश्वरः ॥

निजामशाहसाम्राज्यधुरन्धरमहीपतिः ।
श्रीनृसिंहप्रसादेऽस्मिन्सम्पूर्णां कुरुते शुभम् ॥

इति श्रीमल्लक्ष्मीनृसिंहचरणयुगलसरोरुहभ्रमरसकलभूमण्डलमण्डनसमस्तयवनाधीश्वरनिजामशाहसाम्राज्यधुरन्धरश्रीमन्महाराजाधिराजश्रीदलपतिराजविरचिते श्रीनृसिंहप्रसादे प्रायश्चित्तसारे व्रात्यताप्रायश्चित्तम् ।

## अथ स्तेयप्रायश्चित्तम् ।

ब्राह्मणेन ब्राह्मणस्यैव धनधान्यान्नद्रव्यापहरणेऽब्दं कृच्छ्राचरणम् । ब्राह्मणेन क्षत्रियधनापहरणे षाण्मासिकं व्रतम् । वैश्यधनहरणे त्रैमासिकम् । शूद्रद्रव्यहरणे चन्द्रायणं द्रष्टव्यम् । तथा क्षत्रियादीनां क्षत्रियादिधनहरणे त्रयं द्वयं पादमात्रं वा प्रायश्चित्तं कल्प्यम् । क्षत्रियेण वैश्यादिद्रव्यहरणे षाण्मासिकं त्रैमासिकं च । वैश्येन शूद्रद्रव्यहरणे त्रैमासिकमिति विवेकः । शूद्रपरिग्रहे चान्द्रायणम् । दशकुम्भधान्यहरणे चैतदेव प्रायश्चित्तम् । पञ्चसहस्रपलपरिमाणः कुम्भ इत्युच्यते । तदधिकहरणे वधः ।

"धान्यं दशभ्यः कुम्भेभ्यो हरतोऽभ्यधिके वधः" इत्युक्तत्वात् ।

धान्यसाहचर्यात्तत्परिमाणाल्पधने द्रष्टव्यम् । इदं च कामतः ।

तदाह मनुः—

"धान्यान्नधनचौर्याणि कृत्वा कामाद् द्विजोत्तमः ।
स्वजातीयगृहादेव कृच्छ्राब्देन विशुध्यति" ॥ इति ।

अकामकारे तु त्रैमासिकं गोवधव्रतम् । अन्नं तण्डुलादि । सुवर्णव्यतिरिक्तसारद्रव्यं धनं ताम्ररजतादि । तथा—

"मनुष्याणां च हरणे स्त्रीणां क्षेत्रगृहस्य च ।
कूपवापीजलानां च शुद्धिश्चान्द्रायणेन तु" ॥

इति सार्द्धशतद्वयपणलभ्यजलापहारे । इदं चान्द्रायणं प्राप्तमपीतरगोवधव्रतनिवृत्त्यर्थं विधीयते । एतत् क्षत्रियादिहरणे च । ब्राह्मणद्रव्यहरणे मनुः—

"निक्षेपस्यापहरणे नराश्वरजतस्य च ।
अयस्कान्तोपलानां च द्वादशाहं कणान्नभुक्" ॥ इति ।

अत्रापि एकवारभोजनपर्याप्तभोज्यापहारे स एव ।

"भक्ष्यभोज्यापहरणे यानशय्यासनस्य च ।
पुष्पमूलफलानां च पञ्चगव्यं विशोधनम्" ॥ इति ।

द्विवारभोजनपर्याप्तहरणे—पैठीनसिः "त्रिरात्रभक्ष्यभोज्यान्नस्यैकरात्रभक्ष्यभोज्यान्नस्योदरपूरणमात्रस्य हरणे त्रिरात्रमेकरात्रं वा पञ्चगव्याहारः" इति । मनुः—

"तृणकाष्ठद्रुमाणां च शुष्कान्नस्य गुडस्य च ।
चैलचर्मामिषाणां च त्रिरात्रं स्यादभोजनम्" ॥ इति ।

"मणिमुक्ताप्रवालानां ताम्रस्य रजतस्य च ।
कार्पासकीटजोर्णानां द्विखुरैकखुरस्य च ।
पक्षिगन्धौषधीनां च रज्ज्वाश्चैव त्र्यहं पयः" ॥ इति ।

अत्रापि भक्ष्यादित्रिगुणप्रायश्चित्तदर्शनात्तत्त्रिगुणतुल्यानामपहार एवैतत्प्रायश्चित्तम् । अपहृतद्रव्यन्यूनाधिकभावेन प्रायश्चित्ताल्प-

त्वमहत्त्वं कल्प्यम् । इदं च स्तेयप्रायश्चित्तमपहृतद्रव्यदानोत्तरकालमेव द्रष्टव्यम् । न पुनर्द्रव्यमदत्त्वैव । "दत्त्वैवापहृतं स्वामिने व्रतमाचरेत्" इति विष्णुस्मरणात् ।

इति श्रीमल्लक्ष्मीनृसिंहचरणयुगलसरोरुहभ्रमरसकलभूमण्डलमण्डन-
समस्तयवनाधीश्वरश्रीनिजामशाहसाम्राज्यधुरन्धरश्रीमन्म-
हाराजाधिराजश्रीदलपतिराजविरचिते श्रीनृसिंह-
प्रसादे प्रायश्चित्तसारे स्तेयप्रायश्चित्तम् ।

## अथ ऋणानपाकरणप्रायश्चित्तम् ।

ऋणं त्रिविधम् । देवर्षिमनुष्यर्णभेदात् । तथा च श्रुतिः—"जायमानो वै ब्राह्मणः" इति । तपोब्रह्मचर्याद्यकरणे आर्षमृणम् , यज्ञाकरणे दैवम् , प्रजोत्पत्त्यकरणे पित्र्यम् , आत्मपितृपितामहादिकृतं (तु) मानुषमिति ।

तदुक्तं जैमिनिना षष्ठाध्याये—"ब्राह्मणस्य सोमविद्याप्रजमृणवाक्येन संयोगात्" इति । एषामृणानामनपाकरणे चान्द्रायणादिष्वेकं कार्यम् । तदाह योगी—

"उपपातकशुद्धिः स्यादेवं चान्द्रायणेन वा ।
पयसा वापि मासेन पराकेणाथवा पुनः" ॥ इति ।

मनुना प्रायश्चित्तान्तरमुक्तम्—

"इष्टिं वैश्वानरीं चैव निर्वपेदब्दपर्यये ।

क्लृप्तानां पशुसोमानां निष्कृत्यर्थमसम्भवे" ॥ इति ।

अब्दपर्यये संवत्सरान्ते ।

इति ऋणानपाकरणम् ।

## अथानाहिताग्निप्रायश्चित्तम् ।

सत्यधिकारेऽनाहिताग्नित्वे संवत्सरादूर्ध्वं व्यापदि शक्त्यपेक्षया योगीश्वराभिहितं व्रतचतुष्टयम् । अनापदि तु वत्सरादूर्ध्वं मानवं त्रैमासिकम् । वत्सरादर्वाक् प्रतिमासं त्रिरात्रम् ।

"काले त्वाधाय कर्माणि कुर्याद्विप्रो विधानतः ।

तदकुर्वंस्त्रिरात्रेण मासि मासि विशुध्यति" ॥इति ।

अनाहिताग्नौ पित्रादौ यक्ष्यमाणः सुतो यदि ।

स हि व्रात्येन पशुना यजेत्तन्निष्क्रयाय तु" ।

इति कार्ष्णाजिनिवचनात्—

एकाग्निविषये तु स एव—

"कृतदारो गृहे ज्येष्ठो यो नादध्यादुपासनम् ।

चान्द्रायणं चरेद्वर्षं प्रतिमासमहोऽपि वा " ॥ इति ।

प्रमादात् स्मार्तानां त्यागे भरद्वाजः—"प्राणायामशतमादशरात्रात् । उपवासः स्यादाविंशतिरात्रात् । अत ऊर्ध्वमाषष्ठिरात्रं तिस्रो रात्रीरुपवसेत् । अत ऊर्ध्वमासंवत्सरात् प्राजापत्यं चरेत् । अत ऊर्ध्वं कालबहुत्वाद् दोषबहुत्वम्" इति ।

आलस्येन परित्यागे स्मृत्यन्तरम्—

"आलस्येन यदा वह्निं द्वादशाहं त्यजेत् प्रभुः ।
त्रिरात्रमुपवासं च चरेत्पापविशुद्धये" ।। इति ।

भरद्वाजगृह्येऽपि—"द्वादशाहातिक्रमे त्र्यहमुपवसेत् । मासातिक्रमे द्वादशाहमुपवासः । संवत्सरातिक्रमे मासमुपवासः । पयोभक्षणं वा कूश्माण्डीभिर्होमः क्रमिकमुभयं वेति । मासोपवासासमर्थस्य मासं पयोव्रतं क्रमेण संवत्सरातिक्रमेणोभयमिति यावत् ।

अकामतः परित्यागे श्रौताग्नेर्हारीतोक्तं द्रष्टव्यम् । तथा च संवत्सरोत्सर्गेऽग्निहोत्रे चान्द्रायणं विधाय पुनराधानं कर्तव्यम् । द्विवर्षोत्सर्गे चान्द्रायणं सौम्यायनं कर्तव्यम् । त्रिवर्षोत्सर्गे संवत्सरं कृच्छ्रमभ्यस्य पुनराधानं कर्तव्यम् ।

कामतः परित्यागे—

अग्निहोत्र्यपविध्याग्नीन् ब्राह्मणः कामकारतः ।।
चान्द्रायणं चरेन्मासं वीरहत्याव्रतं समम्" ।। इति मनुस्मरणात् ।

अग्निपरित्यागे प्रायश्चित्तग्रहणवेलायां पूर्वं होमद्रव्यदानमुत प्रायश्चित्तमिति सन्देहे पूर्वं होमद्रव्यदानं ततः प्रायश्चित्तमिति निर्णयः ।

तदाह भरद्वाजः—

"यावत्कालमहोमी स्यात्तावद् द्रव्यमशेषतः ।
तद्दानं चैव विप्रेभ्यो यथा होमस्तथैव च" ।। इति ।

प्रौढश्रीद्विजराजवंशतिलकालङ्कारहीरः प्रभु-
र्भारद्वाजकुलानुगः प्रथमया यः शाखयाऽलङ्कृतः ।

श्रीमद्वल्लभसूनुरात्मनिरतः सत्सम्प्रदायाग्रणीः
सारेऽस्मिन् व्रतचर्यसंज्ञक इह श्रीमद्दलाधीश्वरः ॥
निजामशाहसाम्राज्यधुरन्धरमहीपतिः ।
श्रीनृसिंहप्रसादेऽस्मिन् सम्पूर्णं कुरुते शुभम् ॥

इति श्रीमल्लक्ष्मीनृसिंहचरणयुगलसरोरुहभ्रमरसकलभूमण्डलमण्डनसमस्तयवनाधीश्वरश्रीनिजामशाहसमस्तसाम्राज्यधुरन्धरश्रीमन्महाराजाधिराजश्रीदलपतिराजविरचिते श्रीनृसिंहप्रसादे प्रायश्चित्तसारेऽनाहिताग्निप्रायश्चित्तम् ।

## अथापण्यविक्रयप्रायश्चित्तम् ।

"तत्र तिलगुडपुष्पमूलफलपक्वान्नविक्रये सौम्यकृच्छ्रम् । लाक्षालवणमधुमांसतैलक्षीरदधिघृततक्रगन्धगुडचर्मवाससां विक्रये चान्द्रम् । ऊर्णाकेशकेशरीभूधेनुवेश्मशस्त्रविक्रये चान्द्रम्" इति हारीतमतम् ।

षट्त्रिंशन्मते—सुराया विक्रये सौम्यचतुष्टयम् । लाक्षालवणमांसविक्रये चान्द्रायणत्रयम् । मध्वाज्यतैलसोमविक्रये चान्द्रायणत्रयम् । पयःपायसापूपानां विक्रये चान्द्रायणम् । दधिक्षीरगुडखण्डसर्वस्नेहपक्वविक्रये पराकम् । कदलीफलनारिकेलनारङ्गबीजपूरकविक्रये पादकृच्छ्रम् । कस्तूरीकादिगन्धविक्रयेऽर्द्धकृच्छ्रम् । हिङ्ग्वादिविक्रयेऽप्यर्द्धकृच्छ्रम् । धर्मार्थं कृमिजातरक्तपीतकृष्णादिवस्त्रविषये त्र्यहमुप-

वासः । गोविक्रये प्राजापत्यम् । गजविक्रय ऐन्दवम् । खराश्वाश्वतर-करभविक्रये पराकः । वेदाङ्गस्मृतिविक्रये कृच्छ्रम् । इतिहासपुराणवि-क्रये सान्तपनम् । रहस्यपाञ्चरात्रविक्रये कृच्छ्रम् । शृङ्गिनखशुक्तिवि-क्रये तप्तकृच्छ्रः । हिङ्गुगुग्गुलुहरितालमनःशिलाञ्जनगैरिकक्षारल-वणमुक्ताप्रवालवैणवमृण्मयारामतडागोदपानपुष्करिणीसुकृतविक्रये त्रि-षवणस्नाय्यधःशायी चतुर्थकालाहारो दशसहस्रजपः संवत्सरेण पूतः स्यात् । तत्रानापद्युपपातकसाधारण्येन प्राप्तं त्रैमासिकं मानवम् । आपद्युपपातकसाधारण्येन प्राप्तं योगीश्वराभिहितं व्रतचतुष्टयं शक्त्य-पेक्षया द्रष्टव्यम् ।

तदाह विष्णुः—"मांसलवणलाक्षाक्षीरविक्रयाच्चान्द्रायणं व्रतं कुर्यात् । तं भूयश्चोपनयेत्" इति ।

तथा षट्त्रिंशन्मते—

"सुराया विक्रयं कृत्वा चरेत्सौम्यचतुष्टयम् ।
लाक्षालवणमांसानां चरेच्चान्द्रायणत्रयम् ॥
मध्वाज्यतैलसोमानां चरेच्चान्द्रायणद्वयम् ।
पयःपायसपूपानां चरेच्चान्द्रायणं व्रतम् ॥
दध्याज्येक्षुरसानां च गुडखण्डादिविक्रये ।
सर्वेषां स्नेहपक्वानां पराकं तु समाचरेत्" ॥ इति ।
कदली नारिकेलं च नारङ्गं बीजपूरकम् ।
एतेषां पादकृच्छ्रः स्यात् जम्बीरादेस्तथैव च" ॥ इति ।

इत्यपण्यविक्रयम् ।

## अथाभक्ष्यविक्रयप्रायश्चित्तम् ।

मज्जामांसस्नाय्वस्थिशृङ्गिनखशुक्तिविक्रये तप्तकृच्छ्रः । विस्तरेण चैतदनुपदं वक्ष्यामः ।

## अथ परिवेदनप्रायश्चित्तम् ।

तत्रामत्या परिवेत्ता चान्द्रादिष्वेकं कृत्वा ज्येष्ठाय स्त्रियं दत्त्वा तेनानुज्ञातां तामुद्वहेत । मत्या चेत् कन्यापित्राद्यज्ञाने ब्राह्मणगृहे भिक्षाशनं कृत्वाऽब्दं व्रतं कार्यम् । कन्यापित्रादिदत्तोद्वाहे त्रैमासिककृच्छ्रातिकृच्छ्रौ कार्यौ । पारिवेद्येन द्वौ कृच्छ्रौ कर्तव्यौ । कन्यया कृच्छ्रः कर्तव्यः । दात्राऽतिकृच्छ्रः कर्तव्यः । होत्रा चान्द्रं कार्यम् ।

तदाह वसिष्ठः—"परिविविदानः कृच्छ्रातिकृच्छ्रौ चरित्वा तस्मै दत्त्वा पुनर्निविशेत, तां चोपयच्छेत्" इति ।

अयमर्थः—परिविविदानः कनीयान् परिवेत्ता । तस्मै ज्येष्ठाय । तां स्वोढाम् । संवत्सरं प्राजापत्यकृच्छ्रेण पावयेयुस्ते ।

शङ्खेन विशेष उक्तः—"परिवित्तिः परिवेत्ता च संवत्सरं ब्राह्मणगृहेषु भैक्ष्यं चरेयाताम्" इति ।

तथा यमोऽपि—

"कृच्छ्रौ द्वौ परिवित्तेस्तु कन्यायाः कृच्छ्र एव च ।
अतिकृच्छ्रं चरेद्दाता होता चान्द्रायणं चरेत्" ॥ इति ।

यदा पुनः कामतः कन्यां पित्रादिदत्तामेव परिणयति तदा-मानवं त्रैमासिकम् । पूर्वोक्तौ कृच्छ्रातिकृच्छ्रौ याज्ञवल्कीयं च व्रतचतुष्टयमज्ञानविषयम् ।

इदं च पर्याहिताग्न्यादीनामपि समानम् । एकयोगनिर्देशात् ।

तदाह वासिष्ठः—"अग्रेदिधिषूपतिः कृच्छ्रं द्वादशरात्रं चरित्वा निर्विशेत तां चैवोपयच्छेत" । अनयोर्लक्षणम्—

ज्येष्ठायां यद्यनूढायां कन्यायामूह्यतेऽनुजा ।
या साऽग्रेदिधिषूर्ज्ञेया पूर्वा तु दिधिषूः स्मृता" ॥ इति ।

अत्र विज्ञानेश्वराणामयमाशयः—अग्रेदिधिषूपतिः प्राजापत्यं कृत्वा तामेव ज्येष्ठां पश्चादन्येनोढामुद्वहेत'। दिधिषूपतिस्तु कृच्छ्रातिकृच्छ्रौ कृत्वा स्वोढां ज्येष्ठां कनीयस्याः पूर्वविवोढ्रे दत्त्वान्यामुद्वहेदिति ।

अग्रेदिधिषूपतिस्तां परित्यज्य प्राजापत्यं चरित्वा ततः पूर्वपरिणीतामुद्वहेत निर्विशेत । दिधिषूपतिस्तस्मै कनिष्ठापतये पूर्ववद्दत्त्वा कृच्छ्रातिकृच्छ्रौ चरित्वा पुनः पूर्वपरिणीतामेवोद्वहेत, इति ।

अत्र सुमन्तुना विशेष उक्तः—

"परिवेत्तृकन्यादातृयाजकानां द्वादशरात्रं सक्तुप्राशनं ब्राह्मणतर्पणं तां पुनर्भुवमित्याचक्षतो न भूयश्चैव तामधिगच्छेत्" इति । सोदरकनिष्ठभ्रात्रा सोदरज्येष्ठा कन्या प्रथमं विवाहिता ततो ज्येष्ठेन भ्रात्रा कनीयसी विवाहिता । अथवा ज्येष्ठभ्रात्रा प्रथमं कनीयसी विवाहिता कनिष्ठेन पश्चाज्ज्येष्ठा । तां भूयो नाभिगच्छेत् न प्राप्नुयात्परित्यजेदिति यावत् ।

प्रौढश्रीद्विजराजवंशतिलकालङ्कारहीरप्रभु—
र्भारद्वाजकुलानुगः प्रथमया यः शाखयालङ्कृतः ।
श्रीमद्वल्लभसूनुरात्मनिरतः सत्संप्रदायाग्रणीः
सारेऽस्मिन्व्रतचर्यसंज्ञक इह श्रीमान्दलाधीश्वरः ॥

निजामशाहसामाज्यधुरन्धरमहीपतिः ।
श्रीनृसिंहप्रसादेऽस्मिन् सम्पूर्णं कुरुते शुभम् ॥

इतिश्रीमल्लक्ष्मीनृसिंहचरणयुगलसरोरुहभ्रमरसकलभूमण्डलमण्डनसमस्तयवनाधीश्वरश्रीनिजामशाहसमस्तसाम्राज्यधुरन्धरश्रीमन्महाराजाधिराजश्रीदलपतिराजविरचिते श्रीनृसिंहप्रसादे प्रायश्चित्तसारे परिवेत्तृप्रायश्चित्तम् ।

## अथ भृतकाध्यापनादिप्रायश्चित्तम् ।

भृतकाध्यापको भृतकाध्येता भृतकाध्यापितो वा पयसा ब्राह्मीसुवर्चलां त्रीन्पक्षान् नियतः पिबेत् । व्रतचतुष्टयान्यतमान्वा शक्त्यनुसारेण वा कुर्यात् । अनुयोगप्रदानेऽप्येवम् । उत्कर्षहेतोरधीयानस्य किं पठसि नाशितं त्वयेत्येवं पर्यनुयोगोऽनुयोगप्रदानम् । ततश्चानुयोगप्रदानाभ्यासे पातित्यमेव भवति । तत्र विष्णुस्तदाह—

"भृतकाध्यापनं कृत्वा भृतकाध्यापितश्च यः ।
अनुयोगप्रदाने नत्रीन्पक्षान्नि(१)यतःपिबेत्" इति ॥

अनुयोगप्रदानं नाम "यशसे धनाय वा सम्यगधीयानः सः, त्वया न सम्यगधीयते, इत्याक्षेपः । "दत्तानुयोगानध्येतुः पतितान्मनुरब्रीत्" इति मनुस्मरणात् ।

इति भृतकाध्यापनम् ।

---

(१) "त्रीन्पक्षास्तु पयः पिबेत्" इति हरीतेनोक्तम् ।

## अथ पारदार्यप्रायश्चित्तम् ।

गुरुतल्पसमादिषु प्रायश्चित्तसमप्रायश्चित्तविशेषोऽभिहितः । अवशिष्टेषूपपातकप्रकरणपठितेषु विचारः । तत्र ऋतुकाले कामतो जातिमात्रब्रह्मणीगमने वार्षिकं व्रतं प्राकृतं ब्रह्मचर्यम् । ऋतुकाल एव कर्म्मसाधनत्वादिगुणशालिब्राह्मणीगमने वर्षद्वयं प्राकृतं ब्रह्मचर्यम् । ऋतुकाल एव श्रोत्रियभार्यागमने त्रैवार्षिकं व्रतं प्राकृतं ब्रह्मचर्यम् । श्रोत्रियगुणवतीभार्यागमन इव तादृश्यां क्षत्रियायां द्वैवार्षिकं तादृश्यामेव वैश्यायां वार्षिकं तथैव शूद्रायां षाण्मासिकं ब्रह्मचर्यं कल्पनीयम् । प्राकृतं ब्रह्मचर्यं ब्रह्महत्याप्रायश्चित्तम् । एवं क्षत्रियस्यापि क्षत्रियादित्रिषु द्वैवार्षिकवार्षिकषाण्मासिकानि कल्प्यानि, वैश्यस्य वैश्याशूद्रयोर्वार्षिकषाण्मासिके, शूद्रस्य शूद्रयां परभार्यायां षाण्मासिकमेव योजनीयम् ।

अनेनैवाभिप्रायेणाह संग्रहकारः—

"ऋतुकाले जातिमात्रब्राह्मणीगमने द्विजः ।
वार्षिकं च व्रतं कुर्याद् गुणवत्यां द्विवार्षिकम् ॥
श्रोत्रियस्य तु भार्याया गमने तु त्रिवार्षिकम् ।
तादृग्विधक्षत्रियाया गमने तु द्विवार्षिकम् ॥
चरेत्संवत्सरं वैश्यां शूद्रां षाण्मासिकं व्रतम् ।
क्षत्रियः क्षत्रियां गत्वा वार्षिकद्वितयं चरेत् ॥
वैश्यानां तु तदर्द्धं स्यात् शूद्राणां च तदर्द्धकम् ।

वैश्यां गत्वा तथा वैश्यः शूद्रीं चैव तदर्द्धकम् ।

शूद्रां गत्वा तदा शूद्रः तदर्द्धं व्रतमाचरेत्" ॥ इति ।

अनयैवाशयमुद्रया शङ्खेनापि—"वैश्यायामवकीर्णः संवत्सरं ब्रह्मचर्यं त्रिषवणं चानुतिष्ठेत्, क्षत्रियायां द्वे वर्षे, त्रीणि ब्राह्मण्याम्, वैश्यायां शूद्रायां ब्राह्मणपरिणीतायाम्" इति वर्णक्रमेण विभागो दर्शितः । एवं क्षत्रियस्यापि क्षत्रियादिस्त्रीषु क्रमेण द्वैवार्षिकैकवार्षिकषाण्मासिकानि पूर्वविषये योज्यानि ।

आपस्तम्बः—"सवर्णायामनन्यपूर्वायां सकृत्सन्निपाते चरणं पततीत्युपदिशति । एवमभ्यासे पादः पादश्चतुर्थे सर्वम्" इति ।

अयमर्थः—अग्निहोत्रादिसाधनत्वादिगुणविशिष्टामनन्यपूर्वां श्रोत्रियपत्नीं सकृद्गत्वा द्वादशवार्षिकस्य व्रतस्य पादव्रतं कार्यम् । एवंविधस्त्र्यन्तरसकृद्गमने पादद्वयं व्रतम्, एवंविधचतुर्थस्त्रीगमने सर्वं द्वादशवार्षिकं व्रतमनुष्ठेयम् । इदं च प्रायश्चित्तं कामकारविषयं द्रष्टव्यम् । अकामतश्चेदेतदेव व्रतमर्द्धक्लृप्त्या योज्यम् ।

अनृतुकाले तु जातिमात्रब्राह्मण्यां कामतो गमने मनूक्तं त्रैमासिकम् । जातिमात्रक्षत्रियादिस्त्रीषु द्वैमासिकचान्द्रायणमासिकानि योजनीयानि । क्षत्रियादीनां क्षत्रियादिस्त्रीषु द्वैमासिकादीनि द्रष्टव्यानि । कामतस्त्वेतासु त्रैवर्णिकानां योगीश्वराभिहितवृषभैकादश-गोदानं मासं पञ्चगव्याशनं मासं प्राजापत्याचरणानि क्रमेण ज्ञेयानि । कामतः शूद्रागमने तु—

"शूद्रां तु ब्राह्मणो गत्वा मासं मासार्द्धमेव वा ।

गोमूत्रयावकाहारस्तिष्ठेत्तत्पापमोक्षकः" ॥

इति संवर्तस्मृत्यालोचनेन मासव्रतमेवार्द्धकं द्रष्टव्यम् । अकामतोऽर्द्धमासिकमित्याशयः । ब्राह्मणस्येदं प्रेक्षापूर्वकं ब्राह्मणदारानभिगच्छतो निवृत्तधर्म्मकर्म्मणः कृच्छ्रः, अनिवृत्तधर्म्मकर्मणोऽतिकृच्छ्रः । इदमबुद्धिपूर्वं सकृद्गमने, बुद्धिपूर्वगमने तु द्विगुणम् । "अर्द्धमेव प्रमादे" इति लिङ्गात् । अभ्यासे तु पादहीनो द्रष्टव्यः ।

"विप्रामस्त्रजनां गत्वा प्राजापत्यं समाचरेत्" इति संवर्ताभिहितं तु विप्रोढासु द्विजातिस्त्रीसु द्वित्रिव्यभिचारितासु अबुद्धिपूर्वगमने द्रष्टव्यम् । कामतस्तु कृच्छ्रद्वयं द्रष्टव्यम् ।

तदाह यमः—

"राज्ञीं प्रव्रजितां धात्रीं साध्वीं वर्णोत्तमामपि ।
कृच्छ्रद्वयं प्रकुर्वीत सगोत्रामभिगम्य च" ॥ इति ।

शङ्खः—"स्वैरिण्यां वृषल्यां चावकीर्णः सचैलं स्नायात्, ब्राह्मणायोदकुम्भम्, वैश्यायां चतुर्थकालाहारो ब्राह्मणेभ्यो भोजनं क्षत्रियायां त्रिरात्रोपोषितो यवाढकं ब्राह्मण्यां त्र्यहमुपोष्य घृतपात्रं दद्यात्" इति ।

वृषली शूद्रा । इदं च व्रतमबुद्धिपूर्वविषयम् । वारचतुष्टये व्यभिचारे स्वैरिणी । तथा च स्मृतिः—"चतुर्थे स्वैरिणी प्रोक्ता पञ्चमे बन्धकी मता" इति ।

तथा षट्त्रिंशन्मते—

"ब्राह्मणीं बन्धकीं गत्वा किञ्चिद् दद्याद् द्विजातये ।
राजन्यां तु धनुर्दद्याद् वैश्यां गत्वा तु चैलकम् ।
शूद्रां गत्वा तु वै विप्र उदकुम्भं द्विजातये ।

दिवसोपोषितो वा स्याद्दद्याद्विप्राय भोजनम्" इति ।

अत्र किञ्चिच्छब्देनाष्टमुष्टिपरिमितं धान्यमुच्यते । तथा च "अष्टमुष्टिर्भवेत्किञ्चित्" इति स्मृतिरिति । इदं च प्रायश्चित्तं गर्भानुत्पत्तिविषयम् । तदुत्पत्तौ यद्विशेषेण यत्प्रायश्चित्तमभिहितं तदेव तत्र द्विगुणं कुर्यात् ।

तदाहोशनाः—"गमने तु व्रते यस्माद् गर्भे तद्द्विगुणं चरेत्"इति स्मरणात् । यश्च शूद्र्यां गर्भमादधाति स वर्षत्रयं चतुर्थकाले नक्तभोजनं कुर्यात्" इति । तथोक्तं चतुर्विंशतिमते—"वृषल्यामभिजातस्तु त्रीणि वर्षाणि चतुर्थकालसमये नक्तं भुञ्जीत" इति । वृषली शूद्रा तस्यामभिजातो जातापत्य इत्यर्थः ।

गर्भादर्वाक्तु तत्रैवाभिहितम्—

"शूद्राणां हीनजातीनां स्त्रियं गत्वा तु कामतः ।
प्राजापत्यं प्रकुर्वीत इष्टिं वा वारुणीं द्विजः" ॥ इति ।
"शूद्रीं शयनमारोप्य ब्राह्मणो यात्यधोगतिम् ।
जनयित्वा तु तं तस्यां ब्राह्मण्यादेव हीयते" ॥

इति मनुवचनं तु पापगौरवख्यापनपरम् । शूद्रश्चेत्स्वभार्याभ्रान्त्या ब्राह्मणीं गच्छति तदा द्वादशवार्षिकं कुर्यात् ।

तदाह वृद्ध प्रचेताः—

"शूद्रस्य ब्राह्मणीं मोहाद् गच्छतः शुद्धिमिच्छतः ।
पूर्वमेतद्व्रतं देयं माता यस्माद्धि तस्य सा ॥
पादहीनान्यवर्णासु गच्छतः सार्ववर्णिकम्" इति ।

कामतश्चेद्वध एव "प्रातिलोम्ये वधः पुंसो नार्याः कर्णादि-

कर्त्तनम्'' इतिस्मरणात् ।

न च—

"शूद्रस्तु ब्राह्मणीं गत्वा कथंचित्काममोहितः ।
गोमूत्रयावकाहारो मासेनैकेन शुद्ध्यति'' ॥

इतिवचनविरोध इति मन्तव्यम् । एतस्यात्यन्तव्यभिचारिब्राह्मणीविषयत्वात् ।

संवर्त्तः—"कथंचित् ब्राह्मणीं गच्छेत् क्षत्रियो वैश्य एव च ।
कृच्छ्रं सान्तपनं वा स्यात्प्रायश्चित्तं विशुद्धये'' इति ।

तदप्यत्यन्तव्यचारिब्राह्मणीविषयम् ।

अन्त्यजागमने बृहत्संवर्त्तः—

"रजकव्याधशैलूषवेणुचर्म्मोपजीविनीः ।
एतासु ब्राह्मणो गत्वा चरेच्चान्द्रायणद्वयम्'' ॥

इदं च ब्राह्मणस्य कामतः सकृद्गमनविषयम् ।

क्षत्रियादीनां तु पादहीनम् । तथापस्तम्बेनाप्युक्तम्—

"म्लेच्छी नटी चर्म्मकारी रजकी बुरुडी तथा ।
एतासु गमनं कृत्वा चरेच्चान्द्रायणद्वयम्'' ॥ इति ।

एतदभ्यासविषयम् ।

"रजकश्चर्म्मकारश्च नटो बुरुड एव च ।
कैवर्त्तमेदभिल्लाश्च सप्तैते ह्यन्त्यजाः स्मृताः'' ॥

यच्च शातातपनोक्तम्—

"कैवर्तीं रजकीं चैव वेणुचर्म्मोपजीविनीम् ।
प्राजापत्यविधानेन कृच्छ्रेणैकेन शुद्ध्यति'' ॥ इति ।

चर्म्मोपजीविनीं गच्छन्निति शेषः । इदं शातातपवाक्यं रेतः-सेकात्प्राङ्निवृत्तिविषयं द्रष्टव्यम् । कापालिकस्त्रीगमने यमः—

"कापालिकान्नभोक्तॄणां तन्नारीगामिनां तथा ।
ज्ञानात् कृच्छ्राब्दमुद्दिष्टमज्ञानादैन्दवद्वयम्" ॥ इति ।

जातिभेदेन गर्भाधाने चतुर्विंशतिमतेऽभिहितम्—

ब्राह्मणीगमने कृच्छ्रं गर्भे सान्तपनं चरेत् ।
राज्ञीगर्भे पराकः स्याद् विड्गर्भे तु त्र्यहाधिकम् ॥
शूद्रागर्भे द्विजः कुर्यात्तद्वच्चान्द्रायणं स्मृतम् ।
चाण्डाल्यां गर्भमारोप्य गुरुतल्पव्रतं चरेत्" इति ।

आपस्तम्बः—

"अन्त्यजायां प्रसूतस्य निष्कृतिर्न विधीयते ।
निर्वासनं कृताङ्कस्य तस्य कार्यमसंशयम्" ॥ इति ।

एतत्कामकारविषयम् । यत्पुरुषाणां व्रतं तत्स्त्रीणामपि समानम् ।

तदाह मनुः—

"यत्पुंसः परदारेषु तच्चैनां चारयेद् व्रतम्" इति ।

प्रातिलोम्येन यः स्त्रीपुंसयोः प्रायश्चित्तभेदः स पूर्वमेव दर्शितो वशिष्ठवचनेन । संवर्त्तः—

"ब्राह्मण्यकामाद्गच्छेच्चेत् क्षत्रियं वैश्यमेव वा ।
गोमूत्रयावकैर्मासात्तदर्धाच्च विशुध्यति" ॥ इति ।

कामतस्तु द्विगुणं कर्त्तव्यम् । "कामात्तद् द्विगुणं भवेत्" इति वचनात् ।

षट्त्रिंशन्मते—"क्षत्रिययोषितो ब्राह्मणराजन्यवैश्यसेवायां कृच्छ्रार्द्धं प्राजापत्यमतिकृच्छ्रं वा, वैश्ययोषितो ब्राह्मणराजन्यवैश्यसेवायां कृच्छ्रपादः कृच्छ्रार्द्धं प्राजापत्यं वा, शूद्रायाः शूद्रसेवने प्राजापत्यम्, ब्राह्मणराजन्यवैश्यसेवायां त्वहोरात्रं त्रिरात्रं कृच्छ्रार्द्धम्" इति ।

शूद्रसेवने बृहत्प्रचेतसा विशेष उक्तः—

"विप्रा शूद्रेण संपृक्ता न चेत्तस्मात्प्रसूयते ।
प्रायश्चित्तं स्मृतं तस्याः कृच्छ्रं चान्द्रायणत्रयम् ॥
चान्द्रायणे द्वे कृच्छ्रश्च विप्राया वैश्यसंगमे ।
कृच्छ्रचान्द्रायणे स्यातां तस्याः क्षत्रियसंगमे ॥
क्षत्रिया शूद्रसंपर्के कृच्छ्रं चान्द्रायणद्वयम् ।
चान्द्रायणं सकृत्कृच्छ्रं चरेद् वैश्येन संगता ॥
शूद्रं गत्वा चरेद्वैश्या कृच्छ्रं चान्द्रायणोत्तरम् ।
आनुलोम्ये प्रकुर्वीत कृच्छ्रं पादावशेषितम्" ॥ इति ।

गर्भधारणे चतुर्विंशतिमते विशेषः—

"विप्रगर्भे पराकः स्यात् क्षत्रियस्य तथैन्दवम् ।
ऐन्दवं च पराकं च वैश्यस्याकामकारतः ॥
शूद्रागर्भे भवेत्त्यागश्चण्डालो जायते यतः ।
गर्भस्रावे धातुदोषे चरेच्चान्द्रायणत्रयम्" ॥ इति ।

कामतस्तु पराकादिकं द्विगुणं कुर्यात् । उक्तवचनात् । यदा तु शूद्रगर्भप्रसवस्तदा प्रायश्चित्तमेव नास्ति । तदाह वसिष्ठः—

"ब्राह्मणक्षत्रियविशां भार्याः शूद्रेण संगताः ।

अप्रजाता विशुद्ध्यन्ति प्रायश्चित्तेन नेतराः" ॥ इति ।

आहितगर्भायास्तु पश्चाच्छूद्रादिभिर्व्यभिचारे गर्भपातशङ्कया प्रसवोत्तरकालमेव प्रायश्चित्तं कर्त्तव्यम् । गर्भोऽपि संस्कार्यः । तथा च स्मृत्यन्तरं पठति—

"अन्तर्वत्नी तु या नारी समेताक्रम्य कामिना ।
प्रायश्चित्तं न कुर्यात्सा यावद्गर्भो न निःसृतः ॥
जाते गर्भे व्रतं पश्चात्कुर्यान्मासं हि यावकम् ।
न गर्भे दोषस्तत्रास्ति संस्कार्यः स यथाविधि" ॥ इति ।

यदि हि नारी नवयौवनगर्वितौद्धत्यात्प्रायश्चित्तं न गृह्णाति तदा नार्याः कर्णादिकर्तनमिति ज्ञेयम् । तस्या इति शेषः ।

स्त्रीणामन्त्यजगमने स्मृत्यन्तरे प्रायश्चित्तमपि दृश्यते ।

"रजकव्याधशैलूषवेणुचर्मोपजीविनः ।
ब्राह्मणी तान्यदा गच्छेदकामादैन्दवत्रयम्" ॥ इति ।

चाण्डालादिगमनेऽपि—

"चण्डालं पुल्कसं म्लेच्छं श्वपाकं पतितं तथा ।
ब्राह्मण्यकामतो गत्वा चान्द्रायणचतुष्टयम्" ॥ इति ।

कामतो द्विगुणम्—

"चाण्डालेन तु सम्पर्कं यदि गच्छेत्कथञ्चन ।
सशिखं वपनं कुर्याद्भुञ्जीयाद्यावकोदनम् ॥
त्रिरात्रमुपवासः स्यादेकरात्रं जले वसेत्" ॥ इति ।

कामतः सकृद्गमने आह ऋष्यशृङ्गः—

"सम्पृक्ता स्यादथान्त्यैर्या सा कृच्छ्रार्द्धं समाचरेत्" इति ।

र्या एव चाण्डालादिगमने स एव विशेषमाह—

"अन्तर्वत्नी तु युवतिः सम्पृक्ता चान्त्ययोनिना ।
प्रायश्चित्तं न सा कुर्याद्यावद् गर्भो न निःसृतः ॥
न प्रचारं गृहे कुर्यान्न चाङ्गेषु प्रसाधनम् ।
न शयीत समं भर्त्रा न वा भुञ्जीत बान्धवैः ॥
प्रायश्चित्तं गते गर्भे विधिं कृच्छ्राधिकं चरेत् ।
हिरण्यमथ वा धेनुं दद्याद्विप्राय दक्षिणाम्" ॥ इति ।

त्यन्ताभ्यासे उशनाः—

"अन्त्यजेन तु संपर्के भोजने मैथुने कृते ।
प्रविशेत् सम्प्रदीप्तेऽग्नौ मृत्युना सा विशुद्ध्यति" ॥ इति ।

तूक्तं प्रायश्चित्तं नानुतिष्ठति तदा पुंलिङ्गेनाङ्कनीया वध्या
तथा च पराशरः—"हीनवर्णोपभुक्ता या साङ्क्या
भवेत्" इति । अङ्क्या पुंलिङ्गेनाङ्कनीया । "वधोऽत्र
र्त्तनम्" इत्यपरार्कः ।

कसादिगमने प्रायश्चित्तं चेन्न श्रुतं तदा चाण्डालादिगमनो-
त्तं कुर्यात् । रजकादिगमने यत्प्रायश्चित्तं तत्सदृशीष्वपि
स्याहोशनाः—

"बहूनामेकधर्माणामेकस्यापि यदुच्यते ।
सर्वेषां तद्भवेत्कार्यमेकरूपा हि ते स्मृताः" ॥ इति ।

तृजायाविषये योगीश्वर उक्तवान्—"अनियुक्तो भ्रातृजायां
द्रायणं चरेत्" । "घृताभ्यक्त ऋतावियात्" इत्यादिवि-
हत इत्यर्थः । एतत् सकृदकामकारविषयम् ।

कामकारे शङ्खोक्तम्—परिवित्तिः परिवेत्ता च संवत्सरं ब्राह्मणगृहेषु भैक्ष्यं चरेत्, ज्येष्ठभार्यायामनियुक्तो गच्छन्, तद्वदेव कनिष्ठभार्यायां च" इति । ।

अकामतः सकृद्रजस्वलास्वभार्यागमने योगी—"त्रिरात्रान्ते घृतं प्राश्य गत्वोदक्यां विशुद्ध्यति" इति । त्रिरात्रोपवास इति यावत् । उदक्या रजस्वला । कामतोऽभ्यासे कामतोऽसकृद्गमने शातातपः—"रजस्वलागमने सप्तरात्रम्" इति । कामतोऽभ्यासे बृहत्संवर्त्तः—"रजस्वलां तु यो गच्छेत् गर्भिणीं पतितां तथा ।
तस्य पापविशुद्ध्यर्थमतिकृच्छ्रं विशोधनम्" ॥ इति ।

शङ्खस्तु कामतोऽत्यन्ताभ्यासे विशेषमाह—"पादं तु शूद्रहत्यायामुदक्यागमने तथा" इति । रजस्वलां परभार्यां यदा गच्छति तदा रजस्वलागमनप्रयुक्तं परदारागमनप्रयुक्तं चोभयं प्रायश्चित्तं कर्त्तव्यम् ।

अथ अन्त्यजातिगमने प्रायश्चित्तमाह—

"चण्डालीं वा श्वपाकीं वा अनुगच्छन्ति ये द्विजाः ।
त्रिरात्रमुपवासित्वा विप्राणामनुशासनात् ॥
सशिखं वपनं कृत्वा प्राजापत्यद्वयं चरेत् ।
गोद्वयं दक्षिणां दद्याच्छुद्धिं पाराशरोऽब्रवीत्" ॥ इति ।

तत्र चण्डाली त्रिविधा । एका ब्राह्मण्यां शूद्राज्जाता चण्डाली, द्वितीया आरूढपतिता, तृतीया वा सगोत्रजा । तदेतत् त्रिविधं चण्डालत्वं यम आह—

"आरूढपतिताज्जातो ब्राह्मण्यां शूद्रजश्च यः ।

चण्डालौ तावुभौ मोक्तौ सगोत्राद्यश्च जायते" ॥ इति ।

एतत्त्रिविधचण्डालसन्ततौ जाता स्त्री चण्डाली. क्षत्तोग्रयोर्जाता स्त्री श्वपाकी । तदाह मनुः—"उग्रात्तु जातः क्षत्तायां श्वपाकः" इति । द्विजशब्दोऽत्र ब्राह्मणपरः । क्षत्रियवैश्ययोः पृथग् वक्ष्यमाणत्वात् । उपवासित्वोपवासं चरित्वेत्यर्थः । क्षत्रियवैश्ययोर्दक्षिणाधिक्यमाह—

"क्षत्रियो वाथ वैश्यो वा चण्डालीं यदि गच्छति ।
प्राजापत्यद्वयं कुर्याद् दद्याद्गोमिथुनद्वयम्" ॥ इति ।

शूद्रे तु स्वल्पं व्रतमधिका दक्षिणेत्याह—

"श्वपाकीं वाथ चण्डालीं शूद्रो वा गच्छते यदि ।
प्राजापत्यं चरेत्कृच्छ्रं चतुर्गोमिथुनं ददत्" ॥ इति

ननु स्मृत्यन्तरेऽन्यथा व्रतं क्वचिदन्यथा व्रतम् । तत्र त्वयं निर्णयः । तथा "मातृष्वसृ—पितृष्वसृ—स्नुषा—भगिनी—भागिनेयी—चाण्डालीनामभिगमने तप्तकृच्छ्रम्"इति । तदेतदकामतः प्रवृत्तस्य रेतः सेकात् प्राङ्निवृत्तौ द्रष्टव्यम् । यत्त्वङ्गिरसोक्तम्—

"पतितान्त्यस्त्रियो गत्वा भुक्त्वा च प्रतिगृह्य च ।
मासोपवासं कुर्वीत चान्द्रायणमथापि च" ॥ इति ।

तत्र चन्द्रायणं कामतः प्रवृत्तस्य रेकःसेकात्प्राङ्निवृत्तस्याशक्तस्यावगन्तव्यम् । शक्तस्य मासोपवासः ।

"अकामतस्तु यो विप्रश्चण्डालीमधिगच्छति ।
तप्तकृच्छ्रेण शुद्ध्येत प्राजापत्यद्वयेन वा ॥
कामतस्तु यदा विप्रश्चाण्डालीं यदि सेवते ।

चान्द्रायणेन शुद्ध्येत प्राजापत्यद्वयेन वा" ॥ इति ।

यमः—

"चण्डालपुल्कसानां तु गत्वा भुक्त्वा च योषितम् ।

कृच्छ्राब्दमाचरेज्ज्ञानादज्ञानादैन्दवद्वयम्" ॥ इति ।

इदमुभयं रेतःसेकपर्यन्तं सकृद्गमनविषयम् ।

"अन्त्यजानां तु गमने भोजने तु प्रमापणे ।

पराकेण विशुद्धिः स्याद् भगवानाङ्गिरोऽब्रवीत्"(?)॥ इति ।

मनुः—

"यः करोत्येकरात्रेण वृषलीसेवनं द्विजः ।

स भैक्ष्यभुग् जपन्नित्यं त्रिभिर्वर्षैर्व्यपोहति" ॥ इति ।

वृषली चण्डाली । तदुक्तं स्मृत्यन्तरे—

"चण्डाली बन्धकी वेश्या रजःस्था या च कन्यका ।

ऊढा च समगोत्रेण वृषल्यः पञ्च कीर्तिताः" ॥

इदमेकदिनाभ्यासविषयम् । यदपि च मनुयोगिभ्यामभिहितम्—

"रेतःसेकः स्वयोनिषु कुमारीष्वन्त्यजासु च ।

सख्युः पुत्रस्य च स्त्रीषु गुरुतल्पसमं स्मृतम्" ॥ इति ।

"सखिभार्याकुमारीषु स्वयोनिष्वन्त्यजासु च ।

सगोत्रासु सुतस्त्रीषु गुरुतल्पसमं स्मृतम्" ॥ इति ।

तद्द्वयं पक्षाभ्यासविषयम् । यदप्यवादि मनुना—

"गुरुतल्पव्रतं कुर्याद्रेतः सिक्त्वा स्वयोनिषु ।

सख्युः पुत्रस्य यः स्त्रीषु कुमारीष्वन्त्यजासु च" ॥ इति ।

तदपि मासाभ्यासविषयम् ।

"रेतः सिक्त्वा कुमारीषु चण्डालीष्वन्त्यजासु च ।
सपिण्डापत्यदारेषु प्राणत्यागो विधीयते" ॥

इति यमवाक्यं तु संवत्सराभ्यासविषयम् । मातृगमने उक्तं मातृभगिनीगमनेऽतिदिशति । "मातृष्वसृगमे चैवमात्मनो मेढ्रकर्तनम्" इति मेढ्रविकर्तनेन मरणान्तिकं लक्ष्यते । यद्यपि जननीभगिन्योर्गमनेऽपि पापतारतम्येऽपि जनन्यामकातो भगिन्यां च कामत इति साम्यमुपपद्यते ।

"पितृष्वसारं मातुश्च मातुलानीं स्नुषामपि ।
मातुः सपत्नीं भगिनीमाचार्यतनयां तथा ॥
आचार्यपत्नीं स्वसुतां गच्छंस्तु गुरुतल्पगः" ।

इति योगिवचनं तु कामकृते गुरुतल्पव्रतमकामकृते चान्द्रायणमित्यविरुद्धम् । अनेनैवाभिप्रायेण हारीतेनापि पितृव्यपत्नीगमने चान्द्रमुक्तम् । तद्यथा बृहद्यमः—

"चाण्डालीं पुल्कसीं म्लेच्छीं स्नुषां च भगिनीं सखीम् ।
मातापित्रोः स्वसारं च निक्षिप्तां शरणागताम् ॥
मातुलानीं प्रव्रजितां स्वगोत्रां नृपयोषितम् ।
शिष्यभार्यां गुरोर्भार्यां गत्वा चान्द्रायणं चरेत्" ॥ इति ।

चतुर्विंशतिमतेऽपि—

"पितृष्वसा मातुलानी श्वश्रूर्मातृष्वसा तथा ।
एता गत्वा स्त्रियो मोहाच्चरेच्चान्द्रायणव्रतम्" ॥ इति ।

यद्यप्यकामकृतस्य मूलवचने चान्द्रायणद्वयं विंशतिगावश्चाभिहितास्तथापि तस्य रेतःसेकपर्यन्तगमनविषयत्वादेकचान्द्रायणवचन-

स्य च रेतःसेकात्प्रागेव निवृत्तौ योजनीयत्वान्न विरोधः कश्चित् ।

यदपि च—

"पितृव्यभ्रातृभार्यां च भगिनीं मातुरेव च ।
श्वश्रूमारुह्य धात्रीं च तप्तकृच्छ्रं समाचरेत्" ॥ इति ।
"भगिनीं मातुराप्तां च स्वसारं चान्यमातृजाम् ।
एता गत्वा स्त्रियो मोहात्तप्तकृच्छ्रं समाचरेत्" ॥ इति ।

तदुभयमारोहणपर्यन्तं प्रवृत्तस्य योनिलिङ्गसम्बन्धात्प्राङ् निवृत्तौ द्रष्टव्यम् । जननीव्यतिरिक्तपितृभार्यागमने व्रतम्—

"पितृदारान्समारुह्य मातुराप्तां तु भ्रातृजाम् ।
गुरुपत्नीं स्नुषां चैव भ्रातृभार्यां तथैव च ।
मातुलानीं सगोत्रां च प्राजापत्यद्वयं(१)चरेत्" ॥

गोद्वयं दक्षिणा च । अकामत एता गत्वा इदं प्रायश्चित्तम् । कामतस्त्वग्निप्रवेशः—

"मातरं गुरुपत्नीं च स्वसारं स्वसुतां तथा ।
गत्वा तु प्रविशेदग्निं नान्या शुद्धिर्विधीयते" ॥ इति ।

विष्णुस्मृतावपि—

"मातृगमनं दुहितृगमनं स्नुषागमनमतिपातकानि" इति ।

"अपातकिनस्त्वेते प्रविशेयुर्हुताशनम् ।
न ह्यन्या निष्कृतिस्तेषां विद्यते हि कथंचन" ॥ इति ।

तथाह योगी—

प्रायश्चित्तं चरेत्कृत्स्नं समा वा गुरुतल्पगः ।

---

(१) प्राजापत्यत्रयमिति पराशरस्मृतौ (१० अ० १४ श्लो)।

चान्द्रायणं वा त्रीन्मासानभ्यसेद्वेदसंहिताम्" ॥ इति ।

एतत् त्रैवार्षिकप्राजापत्यव्रतं ब्राह्मणपुत्रस्य शूद्रजातीयगुरुभार्यागमने द्रष्टव्यम् । यदा तु गुरुपत्नीं सवर्णां व्यभिचारिणीमबुद्धिपूर्वं गच्छति तदा वेदजपः संहितापारायणं द्रष्टव्यम् ।

चतुर्विंशतिमतेऽपि—

"भ्रातुश्चैव कनिष्ठस्य भार्यां गत्वा तु कामतः ।
सान्तपनं प्रकुर्वीत कृच्छ्रद्वयमथापि वा ॥
मातुश्च स्वस्रियां गत्वा पितृव्यतनयां तथा ।
तप्तकृच्छ्रं प्रकुर्वीत षड्रात्रं तत्सुतासु च ॥
गुरोर्दुहितरं गत्वा पराकं तु समाचरेत् ।
भागिनेयीं द्विजो गत्वा चरेच्चान्द्रायणं व्रतम् ॥
मातुलस्य सुतां गत्वा पितुश्च स्वस्रियां तथा ।
प्राजापत्यं प्रकुर्वीत हारीतवचनं यथा ॥
मातुश्च स्वस्रियस्यैव भार्यां गत्वा तु कामतः ।
पितृव्यतनयां चैव सपादं कृच्छ्रमाचरेत् ॥
दौहित्रीं पुत्रतनयां चरेच्चान्द्रायणं व्रतम् ।
तत्सुतां च स्नुषां गत्वा पराकं तु समाचरेत् ॥
चरेच्चान्द्रायणं विप्रो गत्वोपाध्याययोषितम् ।
आचार्यस्य पराकं तु बौधायनवचो यथा ॥
सम्बन्धिनः स्त्रियं गत्वा सपादं कृच्छ्रमाचरेत् ।
विधवागमने कृच्छ्रमहोरात्रसमन्वितम् ॥
व्रतस्थागमने कृच्छ्रं सपादं तु समाचरेत् ।

सखिभार्यां समारुह्य ज्ञातिस्वजनयोषितम् ॥
स कृत्वा प्राकृतं कृच्छ्रं पादं कुर्यात्ततः पुनः" ।
"कुमारीगमने विप्रश्चरेच्चान्द्रायणं व्रतम् ।
पतितां तु द्विजो गत्वा तदेव व्रतमाचरेत्" ॥

एतेषु सर्वत्र तेषु गौरवलाघवपरीक्षां कृत्वा यथायथं बुद्धिपूर्वाबुद्धिपूर्वाभ्यासानभ्यासादिविषयत्वं कल्पनीयम् ।

मुखमैथुने पराशरेणोक्तम्—"यस्तु पुनर्ब्राह्मणो धर्मपत्नीमुखे मैथुनं सेवेत स दुष्यति प्राजापत्येन शुद्ध्यति" ।

रजस्वलागमने संवर्तः—

"रजस्वलां तु यो गच्छेद् गर्भिणीं पतितां तथा ।
तस्य पापविशुद्ध्यर्थमतिकृच्छ्रो विशोधकः" ॥ इति ।

चतुर्विंशतिमतम्—

"रजस्वलां द्विजो गत्वा पराकं तु समाचरेत् ।
सान्तपनं द्वितीयेऽह्नि प्राजापत्यं परेऽहनि" ॥ इति ।

आपस्तम्बः—

"उदक्यां यदि गच्छेत ब्राह्मणो मदमोहितः ।
प्राजापत्येन शुद्ध्येत ब्राह्मणानां च भोजनात्" ॥

जातिभेदेन गर्भाधाने उच्यते—

"ब्राह्मणीगमने कृच्छ्रं गर्भे सान्तपनं चरेत् ।
राज्ञां गर्भे पराकं स्याद् विड्गर्भे तु त्र्यहादिकम् ॥
शूद्रगर्भे द्विजः कुर्यात् तद्वच्चान्द्रायणं स्मृतम् ।
चण्डालागर्भमारोप्य गुरुतल्पव्रतं चरेत्" ॥ इति ।

मनुः—

"अमानुषीषु गोवर्जमुदक्यायामयोनिषु ।
रेतः सिक्त्वा जले चैव कृच्छ्रं सान्तपनं चरेत्" ॥

यच्च मनुव्याघ्रप्रभृतिभिरुक्तम्—"स्वयोनि-सखि-पुत्रभार्या-कुमार्यन्त्यजाश्रितभार्याविद्धद्भार्याऽहिताग्नियोगि—आचार्य-राजभार्या—प्रव्रजिता-धात्री-पुत्री-पौत्री-सखी—मातुःसखी-पितृव्यदारा—भ्रातृव्य-भार्या-पितृष्वसृ-मातुलानी-स्नुषा-मातुःसपत्नी-भगिनी-आचार्यतनया-आचार्यपत्नी-स्वसुतासु गुरुतल्पव्रतं कर्तव्यम्"। वसिष्ठादिवचनान्येतदर्थप्रतिपादकानि च व्यवस्थापनीयानि । यानि तूक्तविषय एव न्यूनप्रायश्चित्तानि चान्द्रायणादीनि तानि सम्बन्धदवीयस्त्वमाश्रित्य योजनीयानि । तच्च सम्बन्धदवीयस्त्वं सुमन्तुना प्रदर्शितम्—

"पितृपत्न्यः सर्वा मातरः । तद्भ्रातरो मातुलाः । तद्भगिन्यश्च मातृष्वसारः । भगिनीसपत्न्यश्च भगिन्यः । तदपत्यं भागिनेयः । अतोऽन्यथा संकरकारकाणि कृत्वा पापाः पतिताश्च भवन्ति" इति ।

अत्रापि देशव्यपदेशदर्शनात् प्रायश्चित्ताल्पत्वं सिध्यति । एतदेवाभिप्रेत्य संवर्त आह—

"गुरोर्दुहितरं गत्वा (१)स्वसुतां पितुरेव च ।
तस्या दुहितरं चैव चरेच्चान्द्रायणं व्रतम् ॥
सनाभिनीं मातुलानीं मत्वा मातुः सनाभिनीम् ।
गच्छन्नेताः स्त्रियो मोहात्पराकेण विशुद्ध्यति" ॥ इति ।

---

(१) स्वसारमिति पराशरस्मृतिटीकायां माधवः ।

(१० अ० १२-१३ श्लो०)

इति स्मरणात् प्रायश्चित्ताल्पत्वपराणि भिन्नविषयाणि न प्रत्यासन्नपराणीति सर्वग्रन्थरहस्यम् । तस्माद्व्यवस्थया निर्णयः कर्त्तव्य इति ।

## अथ रजस्वलास्पर्शादिप्रायश्चित्तम् ।

अथ पारदार्यप्रायश्चित्तप्रसङ्गादन्यदप्युच्यते किञ्चित् ।

वसिष्ठः—

"स्पृष्ट्वा रजस्वलाऽन्योन्यं स्वगोत्रे त्वेकर्त्तृके ।
कामादकामतो वापि सद्यः स्नानेन शुद्ध्यति" ॥ इति ।

सवर्णासपत्नीविषये मार्कण्डेयोक्तं द्रष्टव्यम् । तथाहि—

"उदक्या तु सवर्णा वा स्पृष्टा चेत्स्यादुदक्यया ।
तस्मिन्नेवाहनि स्नाता शुद्धिमाप्नोत्यसंशयम्" ॥ इति ।

एतदकामकृतस्पर्शविषयम् । कामतश्चेत् स्पर्शस्तदाह कश्यपः—

"रजस्वला तु संस्पृष्ट्वा ब्राह्मण्या ब्राह्मणी यदि ।
एकरात्रं निराहारा पञ्चगव्येन शुद्ध्यति" ॥ इति ।

अनयैव दिशा क्षत्रियादिष्वप्यूहः कार्यः । ब्राह्मण्याः शूद्रादिस्पर्शे वशिष्ठः—

"स्पृष्ट्वा रजस्वलान्योन्यं ब्राह्मणी शूद्रजाऽपि वा ।
कृच्छ्रेण शुद्ध्यते पूर्वा शूद्रा दानेन शुद्ध्यति"॥ इति ।

दानेन पादकृच्छ्रप्राजापत्याम्नायेनेति भावः ।

"स्पृष्ट्वा रजस्वलाऽन्योन्यं ब्राह्मणी वैश्यजापि च ।

पादहीनं चरेत्पूर्वा कृच्छ्रपादं तथोत्तरा ॥

स्पृष्ट्वा रजस्वलाऽन्योन्यं क्षत्रिया शूद्रजापि च ।

उपवासैस्त्रिभिः पूर्वा त्वहोरात्रेण चोत्तरा ॥

स्पृष्ट्वा रजस्वलाऽन्योन्यं क्षत्रियां वैश्यजाऽपि च ।

त्रिरात्राच्छुध्यते पूर्वा त्वहोरात्रेण चोत्तरा ॥

स्पृष्ट्वा रजस्वलाऽन्योन्यं वैश्यां शूद्री तथैव च ।

त्रिरात्राच्छुध्यते पूर्वा उत्तरा तु दिनद्वयात् ॥

वर्णानां कामतः स्पर्शे शुद्धिरेषा पुरातनी ।

अकामतश्चेत् स्पर्शस्तत्र विशेषो विष्णूक्तः—“रजस्वलां हीनवर्णां रजस्वला स्पृष्ट्वा तावन्नाश्नीयाद्यावच्छुद्धा स्यात् । सवर्णामधिकवर्णां वा स्पृष्ट्वा सद्यः स्नात्वा शुद्ध्यति” ।

पतितादिस्पर्शे वासिष्ठो विशेषः—

“पतितान्त्यश्वपाकेन संस्पृष्टा चेद्रजस्वला ।

तान्यहानि व्यतिक्रम्य प्रायश्चित्तं समाचरेत्” ॥

यत्र यत्र प्रायश्चित्तविशेषः श्रूयते । तत्र तत्रोपवासेन रजोदुष्टदिनानि व्यतिक्रम्य चतुर्थदिनमारभ्य व्रतमाचरेत् । प्रायश्चित्तं चतुर्थेऽहनि कर्तव्यमिति भावः ।

अयमत्र प्रायश्चित्तप्रकारः—“प्रथमद्वितीयतृतीयचतुर्थेषु त्रिद्व्येकनक्तव्रतानि कुर्यात् ।

तदाह—“प्रथमेऽह्नि त्रिरात्रं स्याद् द्वितीयेऽद्व्यहमेव तु ।

अहोरात्रं तृतीयेऽह्नि चतुर्थे नक्तमाचरेत् ॥

शूद्रयोच्छिष्टया स्पृष्ट्वा शुना च द्व्यहमाचरेत्” ।

इदं कामतो द्रष्टव्यम् । अकामकारश्चेच्चन्द्रदर्शनाच्छुद्धिः ।

तदाह बौधायनः—

"रजस्वला तु संस्पृष्टा ग्रामकुक्कुटसूकरैः ।
श्वभिः स्नात्वा क्षिपेत्तावद्यावच्चन्द्रस्य दर्शनम्" ॥ इति ।

अपरोऽपि विशेषस्तेनैवोक्तः—

"रजस्वला तु भुञ्जाना श्वान्त्यजातीन् स्पृशेद्यदि ।
गोमूत्रयावकाहारा षड्रात्रेणैव शुद्ध्यति ॥
अशक्तौ काञ्चनं दद्याद्विप्रेभ्यो वापि भोजनम्" ॥ इति ।

द्व्यधिकेभ्यो ब्राह्मणेभ्यो भोजनं देयम् । मार्कण्डेयपुराणे—

"द्विजान् कथञ्चिदुच्छिष्टान् रजःस्त्री यदि संस्पृशेत् ।
स्रावोच्छिष्टे त्वहोरात्रमूर्ध्वोच्छिष्टे त्र्यहं पिबेत्" ॥

स्रावोच्छिष्टं मूत्रादिना । ऊर्ध्वोच्छिष्टं भोजनादिना ।

"मृतसूतकसम्पर्के ऋतुं दृष्ट्वा कथं चरेत् ॥
न स्नानकालमश्नीयादभुक्त्वा चान्द्रायणं चरेत्" ।

मनुः—

"अशुचित्वे समुत्पन्ने मलवद्वाससो यदि ।
अभिषेके तु भुक्तिर्वा दिनत्रयमभोजनम्" ॥

स्नानान्तरमेकभोजनं बालापत्यस्त्रीविषयम् । दिनत्रयमभोजनम् । दिनत्रयमित्यवशिष्टदिनोपलक्षणम् । रजस्वलास्नानप्रकारस्तु अत्र वक्ष्यते । तदास्तामप्रकृतम् । प्रकृतमनुवर्तामहे ।

अथोत्तमजातिसम्भूताया नार्याश्चण्डालसम्पर्के प्रायश्चित्तमभि-

धीयते । तथा च पराशरः—

"डामरे सामरे वापि दुर्भिक्षे वा जनक्षये ।
बन्दिग्राहे भयार्ते वा सदा स्वस्त्रीं निरीक्षयेत्" ॥

डामरः परसैन्यकृतो जाड्यादिः । समरः सेनयोर्युद्धम् । दुर्भिक्षं वृष्ट्यभावादिनाऽन्नाभावः । जनक्षयो मरकादि । देवतानिमित्तैः प्रचुरै रोगविशेषैर्बहूनां प्रजानां मरणम् । बन्दिग्रहो बालात्कारेण स्त्रीणामपहारः । भयार्त्तिश्चोरराजादिकृत उपद्रवः ।

"बन्दिग्राहेण या भुक्ता रज्ज्वा बद्धा बलाद्भयात् ।
कृत्वा सान्तपनं कृच्छ्रं शुद्ध्येत् पाराशरोऽब्रवीत् ॥
सकृद्भुक्त्वा तु या नारी नेच्छन्ती पापकर्मभिः ।
प्राजापत्येन शुध्येत ऋतुप्रस्रवणेन च" ॥

रज्ज्वादिभिर्बद्ध्वा कशादिभिस्ताडयित्वा भयोत्पादनेन या बलाद्भुक्ता सा सान्तपनं कृत्वा शुद्ध्यति । यथा प्रासादात्प्रेक्षत इत्यस्य प्रासादमारुह्य प्रेक्षत इत्यर्थः । तथा भयादिति पञ्चमी भयमुत्पाद्येति व्याख्येया ।

"चाण्डालैः सह सम्पर्कं या नारी कुरुते तु सा ।
विप्रान् दशपरान् कृत्वा स्वयं दोषं प्रकाशयेत् ॥
आकण्ठसम्मिते कूपे गोमयोदककर्दमे ।
तत्र स्थित्वा निराहारा त्वहोरात्रेण निष्क्रमेत् ॥
सशिखं वपनं कृत्वा भुञ्जीयाद्यावकोदनम् ।
त्रिरात्रमुपवासित्वा त्वेकरात्रं जले वसेत् ॥
शङ्खपुष्पीलतामूलं पत्रं वा कुसुमं फलम् ।

सुवर्णं पञ्चगव्यं च क्वाथयित्वा पिबेज्जलम् ॥
एकभक्तं चरेत्पश्चाद्यावत्पुष्पवती भवेत् ।
व्रतं चरति तद्यावत्तावत्संवसते बहिः" ॥ इति ।

तत्र परिवित्तिप्रायश्चित्तं परिवेत्तृप्रायश्चित्तं द्रष्टव्यम् । अत्रायं विशेषः—परिवेत्तृकृच्छ्रातिकृच्छ्रविषये परिवित्तेः प्राजापत्यकृच्छ्राणीति ।

तदुक्तं वशिष्ठेन—"परिवित्तिः कृच्छ्रं द्वादशरात्रं चरित्वा पुनर्निविशेत्तां चैव यच्छेत्"इति ।

वार्धुष्यलवणक्रययोः मन्वाद्युक्तसामान्योपपातकप्रायश्चित्तानि यानि शक्तिगुणाद्यपेक्षया योज्यानि ।

## अथ क्षत्रियादिवधप्रायश्चित्तम् ।

अथ क्षत्रियादिवधे प्रायश्चित्तमभिधीयते । तत्र कर्म्मसाधनत्वादिगुणविशेषक्षत्रियादिवधे षड्वार्षिकं सार्धपादमात्रं प्रायश्चित्तंक्रमेण देयम् । तदाह हारीतः—"षड्वर्षाणि राजन्ये प्राकृतं ब्रह्मचर्यम्" । ब्रह्महत्याप्रायश्चित्तमित्यर्थः । इदं कामकारविषये ज्ञेयम् । अकामकारे त्वर्धं द्रष्टव्यम् ।

ईषद्दुष्टस्त्रीवधे प्रायश्चित्तम्—"तत्र क्षत्रियां हत्वा कृच्छ्राब्दं षण्मासं वा, वैश्यां हत्वा मासत्रयं सार्धमासं वा, शूद्रां हत्वा सार्धमासं सार्धद्वाविंशतिरहानि च" इति ।

तदाह प्रचेताः—"अनृतुमतीं ब्राह्मणीं तथा क्षत्रियां हत्वा कृच्छ्रमब्दं षण्मासान्मासत्रयं च" इत्यादि । इदं च पक्षद्वयं कामकाराकामकारविषयतया द्रष्टव्यम् । प्रातिलोम्येनान्त्यजातिप्रसू-

तानां ब्राह्मण्यादीनामकामतो वधे योगिनोक्तं द्रष्टव्यम् । तथाहि—

"दुर्वृत्तब्रह्मक्षत्रविट्शूद्रयोषाः प्रमाप्य तु ।

दृतिं धनुर्बस्तमविं क्रमाद् दद्याद् द्विजातये" ॥ (१)इति ।

चर्म्ममयं जलभाण्डं दृतिः। बस्तं छागः। अविर्म्मेण्ढः । व्रत-मिदमत्यन्तदुर्बलविषयम् । तपस्यसमर्थविषयं वा । समर्थस्य ताप-सस्य च व्रतमिदं दानतपसोरनुकल्पे । कामतस्तु ब्रह्मगर्भोक्तो विशेषः—

"प्रतिलोमप्रसूतानां स्त्रीणां मासावधिः स्मृतः ।

अन्तरप्रभवाणां च भूतादीनां चतुर्द्विषट्" ॥ इति ।

ब्राह्मण्या वधे षण्मासाः क्षत्रियायाश्चत्वारो वैश्याया द्वावि-त्येवं यथार्हतयान्वयः । यदा तु वेश्याकर्म्मणा जीवन्तीं व्यापद-यति । तदा "वैशिकेन किंचिद्देयम्" इति गौतमः । वेश्याकार्मणा जीवन्त्यां व्यापादितायां किञ्चिद्देयम् । जलपात्रं ब्राह्मण्या वधे, धनुः क्षत्रियायाः, बस्तो वैश्यायाः, अविरन्यशूद्रायाः, वेश्यावधे च जलम्, इति । यदा तु ब्राह्मण्यादयः क्षत्रियादिभिः प्रातिलोम्येन व्यभिच-रन्ति तदा तासां वधे गोवधप्रायश्चित्तं व्रतचतुष्टयं कल्प्यमिति यावत् ।

ईषद्व्यभिचरितब्राह्मण्यादिवधे षाण्मासिकं शूद्रहत्याव्रतं कुर्यात्, कामतः शूद्रावधे मासं पञ्चगव्याशनम्, कामतो ब्राह्मणीवधे तु द्वादशमासिकम् । क्षत्रियादीनां त्वकामतो वधे त्रैमासिकसार्ध-मासिकसार्धद्वाविंशत्यहानि ।

अथ क्षत्रियवैश्यशूद्रवधे त्रैवार्षिकं व्रतमेको वृषभः सहस्रं गावो, वैश्ये वार्षिकं व्रतं वृषभ एक शतं गावः, शूद्रवधे षाण्मासिकं

---

(१) "विशुद्धये" इति याज्ञवल्क्यस्मृतौ पाठः (३अ० २६८श्लो०)।

व्रतम् । अथवा दश धेनूर्दद्यात् । तदाह योगी—

"वृषभैकसहस्रा गा दद्यात् क्षत्रवधे पुमान् ।
ब्रह्महत्याव्रतं चापि वत्सरत्रितयं चरेत् ॥
वैश्यहाऽब्दं चरेदेतत् दद्याद्वैकशतं गवाम् ।
षण्मासाच्छूद्रहाप्येतद्धेनूर्दद्याद्दशाथवा" ॥ इति

एकमधिकं यस्मिन् सहस्रे तदेकसहस्रं तस्य पूरणः एकसहस्रो वृषभः, एकसहस्रो यासां गवां ता वृषभैकसहस्रास्ताः क्षत्रवधे दद्यात् । अथवा ब्रह्महत्याव्रतं त्रिवार्षिकं कुर्यात् । धनिकनिर्धनिकभेदेन पक्षद्वयं सर्वत्र द्रष्टव्यम् । अकामत इदं जातिमात्रक्षत्रादिविषयम् । कामतश्चेद्राजन्यवधे षड्वार्षिकादि ।

"ब्राह्मणः क्षत्रियं हत्वा षड्वर्षाणि व्रतं चरेत् ।
वैश्यं हत्वा चरेदेवं व्रतं त्रैवार्षिकं द्विजः ॥
शूद्रं हत्वा चरेद्वर्षं वृषभैकादशाश्च गाः" ॥ इति ।

क्षत्रियादिहन्तॄणां क्षत्रियादीनां पादं प्रायश्चित्तानि । वृत्तस्थक्षत्रियादौ मानवं प्रायश्चित्तम् । तथाहि—

"तुरीयो ब्राह्महत्यायाः क्षत्रियस्य वधे स्मृतः ।
वैश्येऽष्टमांशो वृत्तस्थे शूद्रे ज्ञेयस्तु षोडश" ॥

वृद्धहारीतो विशेषमाह—

"ब्राह्मणः क्षत्रियं हत्वा षड्वर्षाणि व्रतं चरेत् ।
वैश्यं हत्वा चरेदेवं व्रतं त्रैवार्षिकं द्विजः ॥
शूद्रं हत्वा चरेद्वर्षं वृषभैकादशाश्च गाः" ॥ इति ।

वसिष्ठः—"ब्राह्मणो राजन्यं हत्वाष्टौ वर्षाणि व्रतं चरेत् षड्-

वैश्यं त्रीणि शूद्रम्'' इति । यागस्थश्रोत्रियक्षत्रवधे द्वादशवार्षिकं वैश्ये पादोनं शूद्रे तदर्धम् , इति ।

इदं प्रायश्चित्तं ब्राह्मणकर्तुः क्षत्रियादेः पादपादन्यूनं द्रष्टव्यम्। मूर्धावसिक्तादीनां वधे नैवं प्रायश्चित्तम् । सर्वत्र दण्डवृद्धिह्रासाभ्यां प्रायश्चित्तवृद्धिह्रासौ ज्ञेयौ ।

अथ स्त्रीवधे—तत्र ब्राह्मणादिस्त्रीणां प्रातिलोम्यानां स्वजातिप्रसूतानां ब्राह्मणादिभार्याणां स्वैरिणीनाममत्या वधे तु जलाधारचर्म्मकोशबस्तिधनुश्छागमेषान् क्रमाद्दद्यात् । मत्या षट्चतुरैकमासाः। सूतादीनां वधे चैवम् , वेश्याकर्म्मणा जीवनीनां वधे किञ्चिदेव जलं दद्यात् । प्रातिलोम्येन व्यभिचरितब्राह्मण्यादिस्त्रीवधे स्त्रीणां क्षत्रियादीनां गोवधोक्तप्रायश्चित्तं यथार्हं योज्यम् । ईषद्व्यभिचारितब्राह्मण्यादिवधे तु-ब्राह्मणीवधे त्वमत्या षाण्मासिकं दशधेनूनां दानं वा, क्षत्रियादिवधे त्रैमासिकतत्तदर्धाणि ।

मत्या ब्राह्मण्यादिषु द्विगुणम् , यद्वा वैश्यायां धेनुदानं शूद्रायां चार्धादि । एवं धर्म्मसाधनब्राह्मण्यादिवधे—ब्राह्मण्यां षड्वर्षं प्राकृतं ब्रह्मचर्यम् । क्षत्रियायां त्रैवार्षिकम् । वैश्यायां सार्धं वर्षम् । शूद्रायां नवमासम् । अमत्या सर्वत्रार्धम् । आत्रेय्यां व्रतमुक्तम् ।

## अथ मलिनीकरणप्रायश्चित्तम् ।

अथ हिंसाप्रसङ्गान्मलिनीकरणसंकीर्णकरणहिंसाप्रायश्चित्तमभिधीयते । क्रौञ्चसारसहंसचक्रवाककुक्कुटशुकसारिकाटिट्टिभश्येनगृध्रोलूकजालपादशरभवधे एकोपवासेन शुद्धिः । इदं च व्रतं

प्रत्येकवधे, न समुदायवधे ।समानन्यायतयैकत्रोदाहरत्वात् । जालपादशरभौ पक्षिविशेषौ । तदाह संवर्त्तः—

"चक्रवाकं तथा क्रौञ्चं तित्तिरं शुकसारिके ।
श्येनं गृध्रमुलूकं च तथा पारावतानपि ॥
टिट्टिभं जालपादं च मद्गुं कुक्कुटमेव च ।
एवं पक्षिषु सर्वेषु दिनमेकमभोजनम्" ॥ इति ।

हंसादिवधे मनुना गोदानमभिहितम्—

"हत्वा हंसं बलाकं च बकं बर्हिणमेव च ।
वानरं श्येनभासौ च स्पर्शयेद्ब्राह्मणाय गाम्" ॥ इति ।

योगिनाऽपि—

"हंसश्येनकपिक्रव्याज्जलस्थलशिखण्डिनः ।
भासं च हत्वा दद्याद्गामक्रव्यादस्तु वत्सिकाम्" ॥ इति ।

वृककाककपोतचीडि (चटक) तित्तिरवधे सायं प्रातर्जलमध्ये प्राणायामः । वृकोऽरण्यश्वा न, किंतु पक्षिविशेषः । यावद्भिः प्राणायामैर्नैरन्तर्येण संध्याद्वयसमाप्तिस्तावन्तः कर्तव्याः प्राणायामाः ।

मनुना—शुकवराहतित्तिरवधे घृतकुम्भदानं तिलद्रोणदानं वाभिहितम् । योगिना—शुकादिवधे द्विहायनवत्सदानमुक्तम् । तथाहि—

"गजे नीलवृषाः पञ्च शुके वत्सो द्विहायनः ।
खराजमेषेषु वृषो देयः क्रौञ्चे त्रिहायणः" ॥ इति ।

इदं सर्वं धनिकविषयम् । गृध्रश्येनशशादादीनां वधे एकदिने फलमूलाशनमेव । श्येनः कपोतादीन् पक्षिणो निहन्ति । न तु

शशमत्ति । अतः श्येनशशकौ भिन्नजातीयौ ।

काश्यपीयम्—

"बकबलाहकहंससारसकारण्डवचक्रवाककुररगृध्रश्येनखञ्जरीटटिट्टिभोलूकशुकसारिकातित्तिरमयूरमद्गुकमेचककलविङ्ककपोतपारावतवल्गुलीवधेऽहोरात्रमुपवासः, सर्वबीजदानं च" इति । इदमशक्तविषयम् । मासं भक्तं यदङ्गिरसा काकादिवधे गोवधव्रतमुक्तं तत्संघविषयम् । अन्यथा बहुमुनिविरोधापत्तेः । कारण्डवचकोरपिङ्गलाकुररभारद्वाजादिवधे शिवमन्त्रकल्पोक्तविधिना शिवसम्पूजादि कर्तव्यम् । भेरण्डचाषभासपारावतकपिञ्जलवधेऽहोरात्रमुपवासः । अस्थिमतां कृकलासप्रभृतिप्राणिनां सहस्रपरिमितानां वधे शूद्रहत्याव्रतं प्राकृतं ब्रह्मचर्यं च । अनस्थिमत्कुणदंशमशकप्रभृतीनां शकटपरिमितानां वधे शूद्रहत्याव्रतं पाण्मासिकव्रतं दशधेनुदानं वा वधादर्वाक् । पुनः प्रत्येकवधे तु किञ्चित्सास्थिवधे । अनस्थिप्रत्येकवधे प्राणायामः । प्राणायामस्त्वनस्थिकमरणात् । उक्तपरिमाणाधिक्ये त्वधिककल्पना कार्या । तदाह मनुः—

"अस्थिमतां तु सत्त्वानां सहस्रस्य प्रमापणे ।
पूर्णे चानस्यनस्थ्नां तु शूद्रहत्याव्रतं चरेत्" ॥ इति ।

तथा योगिनाऽपि—

"अप्रदुष्टां स्त्रियं हत्वा शूद्रहत्याव्रतं चरेत् ।
अस्थिमतां सहस्रं तु तथानस्थिमतामनः" ॥ इति ।

अनः शकटम् । तथा च शङ्खः—"अस्थिमत्सहस्रवधे शकटपरिमितानस्थिमद्वधे च शूद्रहत्याव्रतं चरेत्" इति । प्रत्येकवधे

मनुः—

"किञ्चिदेव तु विप्राय दद्यादस्थिमतां वधे ।
अनस्थ्नां चैव हिंसायां प्राणायामेन शुद्ध्यति"॥ इति ।

किञ्चिदष्टमुष्टिमितं धान्यं हिरण्यं वा पणो वा किञ्चिदभिधीयते ।

प्रौढश्रीद्विजराजवंशतिलकालङ्कारहीरः प्रभु–
र्भारद्वाजकुलानुगः प्रथमया यः शाखयालङ्कृतः ।
श्रीमद्वल्लभसूनुरात्मनिरतः सत्सम्मतः प्रक्रिया-
सारेऽस्मिन् व्रतचर्यसंज्ञक इह श्रीमान् दलाधीश्वरः ॥
निजामशाहसाम्राज्यधुरन्धरमहीपतिः ।
श्रीनृसिंहप्रसादेऽस्मिन्सम्पूर्णं कुरुते शुभम् ॥

इति श्रीमल्लक्ष्मीनृसिंहचरणयुगलसरोरुहभ्रमरसकलभूमण्डलमण्डनसमस्तयवनाधीश्वरनिजामशाहसाम्राज्यधुरन्धरश्रीमन्महाराजाधिराजश्रीदलपतिराजविरचिते श्रीनृसिंहप्रसादे प्रायश्चित्तसारे मलिनीकरणप्रायश्चित्तम् ।



## अथ संकरीकरणप्रायश्चित्तम् ।

अथ संकरीकरणे प्रायश्चित्तमभिधीयते । मूषकमार्जारनकुलमण्डूकडुण्डुभाजगरान् हत्वा तिलोदनं, तिलमुद्गमिश्रमन्नम् , ब्राह्मणान् भोजयित्वा लोहदण्डं च दक्षिणां दद्यात् । लोहः कार्ष्णायसी ।

योगी—

"मार्जारगोधानकुलमण्डूकांश्च पत्रिणः ।
हत्वा त्र्यहं पिबेत्क्षीरं कृच्छ्रं वा पादिकं चरेत्" ॥ इति ।

इदं प्रत्येकवधविषयम् । समुदितवधे तु मनुः—

"मार्जारनकुलौ हत्वा चाखुं (चाषं) मण्डूकमेव च ।
श्वगोधोलूककाकांश्च शूद्रहत्याव्रतं चरेत्" ॥ इति ।

इदं षाण्मासिकं द्रष्टव्यम् । तथा च वशिष्ठः—"श्वमार्ज्जारनकुलमण्डूकसर्प (दहर) मूषकान् हत्वा कृच्छ्रं द्वादशरात्रं चरेत् किञ्चिद्दद्यात्" इति । शङ्खेन तु सर्पादिहनने सप्तरात्रं व्रतमुक्तम् । संवर्त्तेन तु त्रिरात्रोपवासो ब्राह्मणभोजनं च । उशनसा—सर्पादिहनने माषमात्रदानम् । तत्सर्वं प्रायश्चित्तलाघवगौरवपर्यालोचनया ज्ञानाज्ञानविषयतया योज्यम् ।

शिशुमारादि हत्वा दिनमेकं वृन्ताकमात्रं भक्षयेत् ।

"शिशुमारं तथा गोधां हत्वा कूर्म्मं च शल्यकम् ।
वृन्ताकफलभक्षी चाप्यहोरात्रेण शुध्यति" ॥ इति ।

काश्यपेन लोहदण्डदानमुक्तम् । अथवा सर्पादीन्हत्वाऽहोरात्रो-

पोषितस्त्रिरात्रमपः पिबेत्, योजनमध्वानं वा गच्छेत्, अब्दैवतं सूक्तं वा जपेत्, इति मनुः । अरण्यश्वादीनां हनने उपवासत्रय-पूर्वं तिलप्रस्थदानं कार्यम् श्वानं हत्वा त्रिरात्रमुपवासः, इति विष्णुः । पैठीनसिना—"काकोलूककृकलासखरवृकसृगालभासब-र्हिमूषकचक्रवाकहंसनकुलमण्डूकविडालश्वप्रभृत्येकैकवधे शूद्रह-त्याव्रतमुक्तं तन्निरन्तराभ्यासज्ञानकृतत्वादिविषयं ज्ञेयम् । गजादिवधे त्रिकालस्नानयुक्त एकोपवासः ।

"गजस्य च तुरङ्गस्य महिषोष्ट्रस्य घातने ।
प्रायश्चित्तमहोरात्रं त्रिसन्ध्यमवगाहनम्" इति स्मरणात् ॥

मनुस्त्वत्र दानविशेषमाह—

"वासो दद्याद्धयं हत्वा पञ्च नीलान् वृषान् गजम् ।
अजमेषावनड्वाहं खरं हत्वैकहायनम्" ॥ इति ।

तथा च विष्णुः—

"गजं हत्वा पञ्चनीलवृषान् दद्यात्, तुरङ्गं हत्वा वासः, एकहायनमनड्वाहं खरवधे, मेषाजवधे सुवर्णकृष्णलम्, तिलमुष्ट्र-वधे च" इति । इदमुभयं धनिकविषयम् ।

निर्धनस्य व्यावृत्तिविषये संवर्तः—

"हस्तिनं तुरगं हत्वा महीषोष्ट्रौ कपिं तथा ।
एषु सर्वेषु कुर्वीत सप्तरात्रमभोजनम्" ॥ इति ।

तथा—

"कुरङ्गं वानरं सिंहं चित्रं व्याघ्रं च घातयन् ।
शुद्ध्यते स त्रिरात्रेण विप्राणां तर्पणेन च" ॥

तर्पणं भोजनम् ।

“व्याघ्रं श्वानं खरं सिंहं मृगं सूकरमेव च ।

एतान्हत्वा द्विजः कुर्याद् ब्राह्मणानां तु भोजनम्” ।। इति ।

जाबालिः—

“सिंहव्याघ्रवृकाणां च मृगखड्गरुरुद्विपान् ।

हत्वा सान्तपनं कुर्याद् गोभूकन्यानृतेषु च” ।। इति ।

गवादिविषयान्यनृतानि गोभूकन्यानृतानि । मृगादिवधे उपवासपूर्वकं नीवारादिपारणम् ।

“मृगरोहिद्वराहाणामवेर्बस्तस्य घातकः ।

अफालकृष्टमश्नीयादहोरात्रमुपोष्य सः” ।। इति ।

कुरङ्गशब्दस्य मृगावान्तरजातिवाचकत्वात्सामान्यवाची मृगशब्दो गोबलीवर्दन्यायेन कुरङ्गेतरविषयः । युध्ययोग्यो मेषो बस्तः । धनिकस्यावृत्तिविषये कश्यपः—

“अजाविकवधे त्रिरात्रं प्रायश्चित्तम् ।

चीर्णान्ते हिरण्यं दद्याद्वस्त्रं च” इति ।

तथा मनुः—

“क्रव्यादस्तु मृगान् हत्वा धेनुं दद्यात्पयस्विनीम् ।

अक्रव्यादो वत्सतरीमुष्ट्रं हत्वा तु कृष्णलम्” । इति ।।

उरगे लोहं पण्डके त्रपुसीसके सूकरे घृतकुम्भ उष्ट्रे गुञ्जा तुरङ्गेंऽशुकं देयम् । गजादिवधे दुर्बलो वृषादिकं दातुमसमर्थश्चेत् कृच्छ्रशब्दलक्षितं क्लेशसाध्यं तपः कुर्यात् ।

तपांसि गौतमोक्तानि—"संवत्सरः षण्मासाश्चत्वारस्त्रयो द्वावेकश्चतुर्विंशत्यहो द्वादशाहः षडहस्त्र्यहोऽहोरात्रः" इति कालः, "एतान्येवानादेशे विकल्पेरन्" इति । यदि मुख्य एव कृच्छ्रो भवेत्तदा गजे शुके च सामान्याकरणे प्राजापत्य एव प्रायश्चित्तं स्यात् । तच्चायुक्तम् । ततश्च गजे द्वैमासिकं यावकाशनं शुके तूपवासः । एवं दानानुरूप ऊहः कार्यः ।

## अथ नास्तिक्यप्रायश्चित्तम् ।

तत्र नास्तिक्यं वेदोक्तकर्म्मनिन्दा तेन जीवनं नास्तिक्यवृत्तित्वम् । नास्तिक्ये सकृत् कृते कृच्छ्रः । अथ नास्तिक्यावृत्त्यावतिकृच्छ्रः । तस्यैवाभ्यासे चान्द्रादिष्वेकम् । अत्यन्ताभिनिवेशेन बहुकालाभ्यासेन पञ्चाब्दं ब्राह्मणगृहे भैक्ष्यचर्या ।

"नास्तिकास्त्रिविधाः प्रोक्ता धर्मज्ञैस्तत्त्वदर्शिभिः ।
क्रियादुष्टा मनोदुष्टा वाग्दुष्टाश्च तथैव च"।। इति वचनात् ।

तदाह वशिष्ठः—"नास्तिकः कृच्छ्रं द्वादशरात्रं चरित्वा विरमेन्नास्तिक्यात्, नास्तिकवृत्तिस्त्वतिकृच्छ्रम्" इति। एतच्च सकृत्करणविषयम् । अभ्यासे मनुयाज्ञवल्क्योक्तान्युपपातकसामान्यप्रायश्चित्तानि द्रष्टव्यानि ।

अत्यन्ताभिनिवेशेन बहुकालाभ्यासे शङ्खः—"नास्तिको नास्तिकवृत्तिः कृतघ्नः कूटव्यवहारी मिथ्याभिशंसी इत्येते पञ्चवत्सरं ब्राह्मणगृहे भैक्ष्यं चरेयुः" इति ।

## व्रतलोपप्रायश्चित्तम् ।

योगी—तत्रोपकुर्वाणस्य नैष्ठिकस्य त्रैवर्णिकब्रह्मचारिणश्च स्त्रीगमनेऽवकीर्णिता जायते । गुरुतल्पे तत्सममेव गुरुप्रायश्चित्तमुक्तम् । ततोऽन्यस्त्रीगमने नैर्ऋतगर्दभालम्भः । तदाह योगी—

"अवकीर्णी भवेद्गत्वा ब्रह्मचारी तु योषितम् ।
गर्दभं पशुमालभ्य नैर्ऋतं स विशुद्ध्यति" ॥ इति ।

तत्र वशिष्ठः—"अरण्ये चतुष्पथे लौकिकाग्नौ नैर्ऋतं गर्दभं पशुमालभेत" इति । तत्र मनुः—

"अवकीर्णी तु काणेन गर्दभेन चतुष्पथे ।
पाकयज्ञविधानेन यजेत निर्ऋतिं निशि" ॥ इति ।

पशोरभावे तु चरुणैव होम इत्याह वशिष्ठः—"नैर्ऋतं वा चरुं निर्वपेत् तस्य जुहुयात् । तत्र मन्त्राः—कामाय स्वाहा, कामकामाय स्वाहा, नैर्ऋत्यै स्वाहा, रक्षोदेवेभ्यः स्वाहा" इति । इदमशक्तविषयम् । शक्तविषये गौतमोक्तो विशेष उक्तः—"गर्दभेनावकीर्णी निर्ऋतिं चतुष्पथे यजेत तस्याजिनमूर्ध्वबालं परिधाय लोहितपात्रे सप्तगृहान् भैक्षं चरेत् कर्म्माचक्षाणः संवत्सरेण शुद्ध्येत्" इति । अत्र मनुना विशेष उक्तः—

"एतस्मिन्नेनसि प्राप्ते वसित्वा गर्दभाजिनम् ।
सप्तागारं चरेद्भैक्ष्यं स्वकर्म्म परिकीर्तयन् ॥
तेभ्यो लब्धेन भैक्ष्येण वर्तयेदेककालिकम् ।
उपस्पृशंस्त्रिषवणमब्देन स विशुद्ध्यति" ॥ इति ।

इदमश्रोत्रियपत्न्यादिविषयम् । श्रोत्रियपत्न्यादिविषये शङ्खोक्तम्–"शूद्रायां वैश्यायां वावकीर्णः संवत्सरं त्रिषवणमनुतिष्ठेत् । क्षत्रियायां द्विवर्षं ब्राह्मण्यां त्रीणि वर्षाणि" ।

ईषद्व्यभिचारिणीविषयेऽङ्गिरसाप्युक्तम्—

"अवकीर्णनिमित्तं तु ब्रह्महत्याव्रतं चरेत् ।
चीरवासास्तु षण्मासात् ततो मुच्येत किल्बिषात्" इति ।

अत्यन्तव्यभिचारिणीविषये शङ्खेनोक्तं द्रष्टव्यम्—"स्वैरिण्यां ब्राह्मण्यामवकीर्णः षड्रात्रमुपोषितो गां दद्यात् , क्षत्रियायामुपोषितस्त्रिरात्रं घृतपात्रं दद्यात् , वैश्यायां चतुर्थकालाहारो ब्राह्मणान् भोजयेत्, यवसभारं च गोभ्यो दद्यात् , वृषल्यामवकीर्णः सचैलं स्नात उदकुम्भं दद्यात् , गोष्ववकीर्णः प्राजापत्यं चरेत्, षण्ढायामवकीर्णः पलालभारं सीसमाषकं च दद्यात्" ।

इदं प्रायश्चित्तं ब्राह्मणक्षत्रियविशां समानमेव । ब्राह्मणस्यार्द्धं क्षत्रिय इत्यादिन्यायाभावात् । अवकीर्णिलक्षणम्—

"खण्डितं व्रतिना रेतो येन स्याद्ब्रह्मचारिणा ।
कामतोऽकामतः प्राहुरवकीर्णीति तं बुधाः" ॥ इति ।

वशिष्ठः—

"अथ गृहस्थविषये—एतदेव रेतसः प्रयत्नोत्सर्गे दिवा स्वप्ने व्रतारम्भे चैवम्" इति ।

यः स्त्रीसम्भोगमन्तरेण कामतो रेतो विसृजति दिवा स्वप्ने व्रतारम्भे वा स नैर्ऋतं गर्दभं चरुं जुहुयात्" इति । ततः प्रयत्नतो

रेतस उत्सर्गे प्रकारः—

"यन्मेऽद्यरेत इत्याभ्यां स्कन्नं रेतोऽभिमन्त्रयेत् ।
स्तनान्तरं भ्रुवोर्मध्ये तेनानामिकया स्पृशेत्" ॥

अयमर्थः—यदा कथञ्चित् स्त्रीसंभोगमन्तरेणापि हठाच्चरमधातुर्विसृष्टः, तदा तत्स्कन्नं रेतो "यन्मेऽद्य रेतः पृथिवीमवस्कन्, पुनर्मामेत्विन्द्रिम्" इत्याभ्यां मन्त्राभ्यामभिमन्त्रयेत् । तेन चाभिमन्त्रितेन रेतसा स्तनयोर्भ्रुवोश्च मध्यमुपकनिष्ठया स्पृशेत् ।

तथा मनुरपि—

"गृहस्थः कामतः कुर्याद् रेतसः स्कन्दनं भुवि ।
सहस्रं तु जपेद्देव्याः प्राणायामैस्त्रिभिः सह" ॥ इति ।

तथा—

"स्वप्ने सिक्त्वा द्विजः शुक्रं ब्रह्मचारी त्वकामतः ।
स्नात्वार्कमर्चयित्वा त्रिः पुनर्मामित्यृचं जपेत्" ॥ इति ।

(१)प्रौढश्रीद्विजराजवंशतिलकालङ्कारहीरप्रभु-
र्भारद्वाजकुलानुगः प्रथमया यः शाखयालङ्कृतः ।
श्रीमद्वल्लभसूनुरात्मनिरतः सत्सम्प्रदायाग्रणीः
सारेऽस्मिन्व्रतचर्यसंज्ञक इह श्रीमान्दलाधीश्वरः ॥
निजाशाहसाम्राज्यधुरन्धरमहीपतिः ।
श्रीनृसिंहप्रसादेऽस्मिन् सम्पूर्णां कुरुतेऽधुना" ॥

इति श्रीमल्लक्ष्मीनृसिंहचरणयुगलसरोरुहभ्रमरसकलभूमण्डल-

---

(१) एष समाप्तिग्रन्थ १२६ पृष्ठे समुचितः ।

मण्डनसमस्तयवनाधीश्वरश्रीनिजामशाहसमस्तसाम्राज्यधुरन्धरश्रीमन्महाराजाधिराजश्रीदलपतिराजविरचिते श्रीनृसिंहप्रसादे प्रायश्चित्तसारेऽवकीर्णिप्रायश्चित्तम् ।

अथ संन्यासिनः पुनर्गार्हस्थ्यस्वीकारे प्रायश्चित्तमभिधीयते । तत्र संवर्त्तः—

"संन्यस्य दुर्मतिः कश्चित्प्रत्यापत्तिं चिकीर्षति ।
स कुर्यात् कृच्छ्रमस्नातः षण्मासान्प्रत्यनन्तरम्" ।। इति।
"यः प्रत्यवसितो विप्रः प्रव्रज्यातो विनिर्गतः ।
अनाशकनिवृत्तश्च गार्हस्थ्यं चेच्चिकीर्षति ।।
स चरेत् त्रीणि कृच्छ्राणि त्रीणि चान्द्रायणानि वा ।
जातकर्म्मादिभिः सर्वैः संस्कृतः शुद्धिमाप्नुयात्" ।।

तत्र ब्राह्मणस्य षाण्मासिककृच्छ्रः क्षत्रियस्य चान्द्रायणं वैश्यस्य कृच्छ्रत्रयमिति व्यवस्था द्रष्टव्या । अथवा षाण्मासिकादित्रितयं ब्राह्मणस्यैवाभ्यासाद्यपेक्षया कल्प्यं व्रतम्। परलोप्येऽप्यवकीर्णिव्रतं मनुनातिदिष्टम्—"अनातुरः सप्तरात्रमवकीर्णिव्रतं चरेत्" इति । यदि व्याधिषु तदा योगियाज्ञवल्क्यः—

"भैक्षाग्निकार्ये त्यक्त्वा तु सप्तरात्रमनातुरः ।
कामावकीर्ण इत्याभ्यां जुहुयादाहुतिद्वयम् ।।
उपस्थानं ततः कुर्यात्समासिञ्चन्त्वनेन तु" इति ।

होममन्त्रौ—

"कामावकीर्णोऽस्मि कामकामाय स्वाहा ।
कामावपन्नोऽस्म्यवपन्नोऽस्मि कामकामाय स्वाहा" ।। इति ।

तत्सर्वं गुरुशुश्रूषादिकार्ये व्यग्रतयाऽकरणे द्रष्टव्यम् ।

यमः—

"जलाग्न्युद्बन्धनभ्रष्टाः प्रव्रज्यानाशकच्युताः ।
विषप्रपतनप्रायाः शस्त्रघातहताश्च ये ॥
न चैते प्रत्यवसिताः सर्वलोकबहिष्कृताः ।
चान्द्रायणेन शुद्ध्यन्ति तप्तकृच्छ्रद्वयेन वा" ॥ इति ।

इदं च शक्तविषयं पद्यद्वयम् । यः शस्त्रेणात्मानं घातयति तस्मिन्मृते तत्पुत्रादिना कार्यं जीवता स्वयमेव कार्यम् । एतच्छस्त्रादिहतविषयम् ।

उक्तप्रायश्चित्तेऽशक्तिश्चेत्तदा वासिष्ठं ज्ञेयम्—"आत्महत्याऽध्यवसाये त्रिरात्रमात्मत्यागी, जीवन् कृच्छ्रं द्वादशरात्रं चरेत्, त्रिरात्रं चोपवसेत्" इति । भर्त्तुरनुगमे चितिभ्रष्टाविषये आपस्तम्बोक्तं ज्ञेयम्—

"चितिभ्रष्टा च या नारी मोहाद् विचलिता यदि ।
प्राजापत्येन शुद्ध्येत तस्मादेवापकर्म्मणः" ॥ इति ।

इदं गुरुशुश्रूषादिव्यग्रतया परित्यागविषयम् । आलस्यादितत्परित्यागे मनूक्तो विशेषः—"अनातुरः सप्तरात्रमवकीर्णिव्रतं चरेत्" इति । एककालादिपरित्यागे हारीतः—"ब्रह्मचारी सन्ध्यामनुपास्योपस्थितः सावित्र्याः सहचारेण तिष्ठेत्, उक्तस्याग्निकार्यं व्रतपत्या अतीतं सम्पाद्योपस्थितं कुर्यात् । अहन्यतीते "पुनर्म्मनो-व्रतपतीत्याभ्या"मिति ।

"पुनर्मनः पुनरायुर्म आगन् पुनः प्राणः पुनरात्मा म आगन्

पुनश्चक्षुः पुनः श्रोत्रं म आगन् ।

वैश्वानरोदब्धस्तनूपा अग्निर्नः पातु दुरितादवद्यात् ।

( यजुर्वे० ४ । १५ ) इति मन्त्रः ।

"अग्ने व्रतपते व्रतं चरिष्यामि" इति । व्रतपतिदिनब्रह्मादिव्रतपरित्यागे सप्तरात्रपर्यन्तमेतदेव व्रतं त्रिषु वा कल्प्यम् । सप्तरात्रानन्तरमवकीर्णिव्रतमिति विवेकः ।

अथ गुरुप्रेषितशिष्यमरणे गुरोः प्रायश्चित्तमभिधीयते । तत्र कृच्छ्रत्रयं प्रायश्चित्तं कुर्यात् । तदाह मनुः ( योगी )–"कृच्छ्रत्रयं गुरुः कुर्यान्म्रियते प्रहितो यदि" इति । तथा बृहद्विष्णुः–"यो गुरुः शिष्यं चौराद्युपहितप्रदेशं महान्धकारं प्रेरयति तदा मृतश्चेत् कृच्छ्रत्रयं प्रायश्चित्तम्" इति ।

अथ यज्ञोपवीतविनाशे । तत्र हारीतः—"मनोव्रतपतीभिश्च मेखलादण्डाजिनयज्ञोपवीतावपातनाशेषु चतस्राज्याहुतीर्हुत्वा पुनर्यथार्थं प्रतीयात् । असङ्कल्प्यगतयजनेऽभ्युदितेऽभिनिर्मुक्ते वान्ते दिवा स्वप्ने स्कन्दने नग्नस्त्रीदर्शने स्त्रीवेश्म श्मशानमाक्रम्य हयादींश्चारुह्य पूजातिक्रमे चैताभिरेव जुहुयात् । अग्निसमिन्धने स्थावरसरीसृपाणां वधे यद्देवादेव हेडनमिति कूष्माण्डीभिराज्यं जुहुयात्, मणिवासोगवादीनां प्रतिग्रहे सावित्र्यष्टसहस्रं जपेत्" इति ।

मनोज्योतिरित्यादिभिर्मनोलिङ्गाभिः "त्वमग्ने व्रतपा असी"त्यादिव्रतलिङ्गाभिः । यथार्थं समन्त्रकं प्रतीयात् गृह्णीयादिति यावत् । अभ्युदितादिभिर्निर्मुक्तौ तु प्रसिद्धौ यस्मिन्सुप्ते सूर्योऽस्तमेति

सोऽभ्युदितः । पश्चात्सुप्ते सूर्य उदेति सोऽभिनिर्मुक्त इत्यभिधीयत इति । तदाह कोषकारः—

"सुप्ते यस्मिन्नस्तमेति सुप्ते यस्मिन्नुदेति च ।
अंशुमानभिनिर्मुक्ताभ्युदितौ तौ यथाक्रमम्" ॥ इति ।

"ब्रह्मसूत्रं विना भुङ्क्ते विण्मूत्रं कुरुतेऽथ वा ।
गायत्र्यष्टसहस्रेण प्राणायामेन शुद्ध्यति" ॥ इति ॥

मांसभक्षणे विशेषः—"ब्रह्मचारी चेन्मांसमश्नीयात्कृच्छ्रं द्वादशरात्रं चरित्वा व्रतशेषं समाचरेत् ।

इत्यवकीर्णिप्रायश्चित्तम् ।

## अथ सुतादिविक्रयप्रायश्चित्तम् ।

तत्र पैठीनसिः—"आरामतडागोदपानपुष्करिणीसुकृतसुतविक्रये त्रिषवणस्नाय्यधःशायी ब्रह्मचारी चतुर्थकालाहारः संवत्सरेण पूतो भवति" इति । एतच्चैकपुत्रस्यानापदि कामादिक्रयविषयम् । अकामतस्त्वकल्पमनापद्यनेकपुत्रविषये ।

चतुर्विंशतिमते—

"नारीणां विक्रयं कृत्वा चरेच्चान्द्रायणं व्रतम् ।
द्विगुणं पुरुषस्यैव व्रतमाहुर्म्मनीषिणः" ॥ इति ।

इदं तु कामकारविषयम् । अकामकारे पराशरः—"विक्रीय कन्यकां गावं कृच्छ्रं सान्तपनं चरेत्" इति । शङ्खोऽपि "देवगृह-

प्रतिश्रयोद्यानारामसभाप्रपातटाकपुण्यदेशसेतुसुतविक्रयं कृत्वा तप्त-कृच्छ्रं चरेत्" इति । तदापद्यकामतो ज्ञेयम् ।

कन्यासंदूषणे च त्रैमासिकचान्द्रायणानि सर्ववर्णानां सर्वविषये योज्यानि। आनुलोम्येऊनमासिकं पयोव्रतं प्राजापत्यं वा । क्षत्रियवै-श्ययोः प्रातिलोम्येन दूषणे शङ्खः—"कन्याविक्रयी सोमविक्रयी च कृच्छ्राब्दं चरेयाताम्"इति ।

यच्च हारीतः—"कन्यादूषी सोमविक्रयी वृषलीपतिः कौमार-दारत्यागी सुरा—मद्यपः शूद्रयाजको गुरोः प्रतिहन्ता नास्तिको नास्तिकवृत्तिः कृतघ्नः कूटव्यवहारी ब्राह्मणमित्रघ्नो मिथ्याभिशंसी पतितसंव्यवहारी मित्रध्रुक् शरणागतघाती प्रतिरूपकवृत्तिरित्येते पञ्चतपोऽभ्रावकाशनजलशयनाद्यनुतिष्ठेयुर्ग्रीष्मवर्षाहेमन्तेषु, मासं गोमूत्रयावकमश्नीयुः, इति । तत् प्रातिलोम्येन कन्यादूषणे द्रष्ट-व्यम् । शूद्रस्योक्तविषये वधः । एवमन्यान्यपि जातिशक्त्याद्यपे-क्षया योज्यानि । धान्यरूपपशुस्तेयप्रायश्चित्तान्युक्तानि ।

## अयाज्ययाजनप्रायश्चित्तमभिधीयते ।

तत्र योगी—

"त्रीन्कृच्छ्रानाचरेद् व्रात्ययाजकोऽभिचरन्नपि ।
वेदप्लावी यवाश्यब्दं त्यक्त्वा च शरणागतम्" इति ॥

अपिशब्दोऽहीनयाजकान्तेष्टियाजकयोः संग्रहार्थः । तदुक्तं मनुना—

"व्रात्यानां याजनं कृत्वा परेषामन्त्यकर्म्म च ।

अभिचारमहीनं च त्रिभिः कृच्छ्रैर्व्यपोहति" ।। इति ।

अन्तकर्म श्माशानिकपरः । असपिण्डः शूद्रो वा । असपिण्डे-त्यभ्यासे। शूद्रे सकृत्करणेऽपि। अनभिचारणीयस्याभिचारः। अहीनो द्वित्रादिर्द्वादशाहपर्यन्तोऽहर्गणयागः ।

कामकारविषये शातातपः—"पतितसावित्रीकान्नोपनयेत्, नाध्यापयेत् न याजयेत्, य एतानुपनयेत्, अध्यापयेत् याजयेद्वा स उद्दालकव्रतं चरेत्" । कामतः शूद्रायाज्ययाजनेन मनूक्तं त्रैमासिकं द्रष्टव्यम् । अकामतश्चेद् योगीश्वराभिहितं मासव्रतादि यथासम्भवं योज्यम् । कामतोऽभ्यासे प्रचेताः—"एते पञ्च तपोऽभ्रावकाशजलशयनान्यनुतिष्ठेयुः । क्रमेण ग्रीष्मवर्षाहेमन्तेषु मासं गोमूत्रयावकमश्नीयुः इति ।

अत्यन्ताभ्यासे गौतमः—"निषिद्धमन्त्रप्रयोगे सहस्रवाग्उपतिष्ठेत्" ।

सहस्रयाजकोऽत्यन्तमधिको बहुर्भवति । तत्संवत्सरं प्राकृतं ब्रह्मचर्यम् ।

इत्ययाज्ययाजनम् ।

पितृमातृसुतत्यागे तटागारामविक्रयेषु च मन्वादिप्रणीतान्युपपातकसाधारणप्रायश्चित्तानि । तानि जात्याद्यपेक्षया योज्यानि । पित्रादित्यागिनां त्वपाङ्क्तेयमध्यपाठात् ।

"षष्ठान्नकालता मासं संहिताजप एव वा ।
होमश्च शाकलैर्नित्यमपाङ्क्तानां विशोधनम्" इति ।

उक्तप्रायश्चित्तमपि कर्तव्यम् । तडागारामविक्रयेषु सुत-

विक्रयप्रायश्चित्तावसरे उक्तानि प्रायश्चित्तानि द्रष्टव्यानि ।

हीनदक्षिणायाजित्वविक्रययोः साधारणोपपातकप्रायश्चित्तं पूर्ववद्योजनीयम् । द्यूतादिव्यसनेष्वप्युपपातकसाधारणोक्तं प्रायश्चित्तं योज्यम् । परिविन्दकयाजनकन्याप्रदानकौटिल्येऽनिषिद्धव्रतलोपे आत्मार्थक्रियारम्भे मद्यपस्त्रीनिषेवणे च साधारणोपपातकप्रायश्चित्तानि योजनीयानि । परिवेदनयाजनप्रायश्चित्तान्युक्तान्यप्याद्यन्तयोर्द्रष्टव्यानि । स्वाध्यायत्यागे शास्त्रश्रवणव्याकुलतया परिवर्जनं सदा त्रैमासिकाद्युपपातकम् । अनाहिताग्नेरग्नित्यागेऽभिहितम् । सुतबन्धुत्यागयोः कामतस्त्रैमासिकादिव्रतमकामतो याज्ञवल्कीयं व्रतचतुष्टयं शक्त्याद्यपेक्षया योज्यम् ।

## द्रुमच्छेदप्रायश्चित्तम् ।

द्रुमच्छेदे मनुराह—

"फलादीनां तु वृक्षाणां छेदने नक्तमृच्छति ।
गुल्मवल्लीलतानां च पुष्पितानां च विरुधाम् ॥

इन्धनार्थं द्रुमच्छेदः" इत्यनेनेन्धनार्थमिति विशेषोपादानाददृष्टार्थेषु न दोषः। अदृष्टार्थेऽपि क्वचिद्विशेषो वाशिष्ठो दृश्यः-"फलपुष्पोपमान्यादाय न हिंस्यात् कर्म्मकारणार्थं चोपहन्यात्"इति । जपानधिकारिषु द्विरात्र्यादिकल्पाभ्यासतारतम्येनोपपातकसाधारणप्रायश्चित्तानि ।

## द्यूतादिप्रायश्चित्तम् ।

व्यसनाभ्यासे बौधायनः—"अथाशुचिकराणि । द्यूतमत्यभिचारोऽनाहिताग्नेरुञ्छवृत्तिता, समावृत्तस्य भैक्षचर्या तस्य गुरुकुले वासः । ऊर्ध्वं चतुर्भ्यो मासेभ्यो यश्चैनमध्यापयति । नक्षत्रनिर्देशनं चेति द्वादश मासान् द्वादशार्धमासान् द्वादश द्वादशाहान् द्वादशषडहान् द्वादश त्रिपक्षान् त्रिपक्षमेकाहमित्यशुचिकरनिर्देशः" ।

प्रचेता अपि—"अनृतवाक् तस्करो राजभृत्यो वृक्षारोपकवृत्तिर्गरदोऽग्निदश्च रथगजारोहणवृत्तिः रङ्गोपजीवी कूटपाणिकः श्वागणिकः शूद्रोपाध्यायी वृषलीपतिर्भाण्डिको नक्षत्रोपजीवी श्ववृत्तिर्ब्रह्मजीवी चिकित्सको देवलः पुरोहितः कितवो मद्यपः कूटकारकोऽपत्यविक्रयी मनुष्यपशुविक्रेता चेति । तानुद्धरेत्समेत्य न्यायतो ब्राह्मणव्यवस्थया सर्वद्रव्यत्यागे चतुर्थकालाहारः संवत्सरं त्रिषवणमुपस्पृशेयुः तस्यान्ते देवपितृतर्पणं गवाह्निकं चेत्येवं व्यवहार्याः„ इति ।

श्वगणेन जीवति यः श्वागणिकः, भाण्डिको राज्ञस्तुर्यादिस्वनैः प्रबोधयिता, श्ववृत्तिः सेवकः, ब्रह्मजीवी द्विजकार्येषु मूल्येन परिचारकः । मनूक्तापाङ्क्त्यमध्येऽपि कितवादिव्यसनिनां पठितत्वात् "षष्ठान्नकालता मासम्" इत्यादीनि प्रायश्चित्तानि वित्ताद्यपेक्षया योजनीयानि । आत्मविक्रये साधारणं प्रायश्चित्तं पूर्ववद्योजनीयम् । बहुकाले शूद्रसेवायां ब्राह्मणसमुद्रयाने ब्राह्मणस्य न्यासापहरणे सर्वैः पण्यैर्व्यवहरणं भूम्यनृतं शूद्रसेवी यश्च शूद्रसेवायामभिजायते तदपत्यं भवति तेषां तु निर्देशः ।

"चतुर्थकालं मितभोजिनः स्युरपोऽभ्युपेयुः सवनानुपूर्व्या ।
स्थानासनाभ्यां विहरन्त एतैस्त्रिभिर्विशेषैरपहन्ति पापम्"॥ इति

त्रिभिर्विशेषैरिति । शूद्रसेवामात्रे तु पूर्ववत् सामान्यप्रायश्चित्तं द्रष्टव्यम् । हीनजातिभिः सम्बन्धे साधारणं प्रायश्चित्तं पूर्ववद्‌द्रष्टव्यम् ।

अहीनसख्यभेदनविषये प्रचेताः—"मित्रभेदकरणोऽहोरात्रमनश्नन् हुत्वा पयः पिबेत्" इति । हीनयोनिनिषेवणं द्विविधमारूढसवर्णादारस्य केवलहीनवर्णागमनं साधारणस्त्रीगमनं वा ।

तत्र प्रथमेऽज्ञानकृते शातातपः—"ब्राह्मणो राजकन्यापूर्वी कृच्छ्रं द्वादशरात्रं चरित्वा निविशेत्तां चोपयच्छेत्, वैश्यापूर्वी तु तप्तकृच्छ्रं शूद्रापूर्वी तु कृच्छ्रातिकृच्छ्रौ, राजन्यो वैश्यापूर्वी :सकृद्‌द्वादशरात्रं चरित्वा निविशेत्तां चैवोपयच्छेत् , शूद्रापूर्व्वी तु कृच्छ्रम्, वैश्यश्चेत् शूद्रापूर्व्वी कृच्छ्रं द्वादशरात्रं चरित्वा तां चोपयच्छेत्" इति । प्रायश्चित्तानन्तरं सवर्णारूढामानुलोम्येन चोपयच्छेदित्यर्थः। कामतश्चेदुपपातकसाधारणप्रायश्चित्तं योज्यम् ।

तत्र द्वितीयं पन्थानमवलम्ब्य यम आह—

"वेश्यागमनजं दोषं व्यपोहन्ति द्विजातयः ।
पीत्वा सकृत् सकृत्तप्तं सप्तरात्रं कुशोदकम्" ॥ इति ।

अकामतो गमने संवर्तः—

"पशुवेश्याभिगमने प्राजापत्यं विधीयते" इति ।

तथा पराशरः—

"पशुवेश्यादिगमने महिष्युष्ट्रीकपीस्तथा ।

खरीं च शूकरीं गत्वा प्राजापत्यं समाचरेत्" ॥ इति ।

[ १० अ. १४ श्लो. ]

यद्यपि कपी शूकरी चाल्पदेहतया मनुष्यपामरैरपि गन्तुमयोग्या । तथापि क्वचिद्देशविशेषे प्रौढदेहयोरपि तयोः सत्त्वादुपगमनं युज्यत इति युक्तं तयोर्ग्रहणम् । इदं हि वेश्यागमनव्रतं वेश्यायां गर्भाधानात्प्रागेवावगन्तव्यम् । गर्भोत्पत्तौ च लक्षगायत्रीजपः ।

"प्रसूतो यस्तु वेश्यायां भैक्षभुङ् नियतेन्द्रियः ।
शतसाहस्रमभ्यस्य सावित्रीमेति शुद्धताम्" ॥

इति कण्वस्मरणात् ।

## अथानाश्रमित्वे प्रायश्चित्तम् ।

अनाश्रमस्वीकारे प्रायश्चित्तमभिधीयते । तत्र हारीतः—"अनाश्रमी संवत्सरं प्राजापत्यं कृच्छ्रं चरित्वाश्रममुपेयात्, द्वितीयेऽतिकृच्छ्रं तृतीयेऽतिकृच्छ्रातिकृच्छ्रम्, अत ऊर्ध्वं चान्द्रायणम्" इति । इदमसम्भवे । सम्भवे पूर्वोक्तमेव व्रतमिति । परान्नपरिपुष्टतयासच्छास्त्राधिगमनेऽकराधिकारितायां भार्याविक्रये च ज्ञानाज्ञानव्यवस्थायां योगिमनुप्रणीतानि साधारणप्रायश्चित्तानि योज्यानि ।

## असत्प्रतिग्रहे प्रायश्चित्तम् ।

अथासत्प्रतिग्रहे प्रायश्चित्तमभिधीयते । प्रतिग्रहासत्त्वं चतुर्धा देशकालदातृस्वभावदुष्टतया । कुरुक्षेत्रादौ गृहीतो देशदुष्टः, सूर्योपरागादौ कालदुष्टः, म्लेच्छचाण्डालादिपतितादिगृहीतो दातृदुष्टः,

सुराजामेषादिग्रहणे च स्वभावदुष्टः, स उत्तममध्यमाधमतया त्रिविधः। तत्र चाण्डालादेः कृष्णाजिनादिप्रतिग्रहे ब्रह्मचर्ययुक्तो गोष्ठे वसन्ननुदिनं सहस्रं सावित्रीं जपन् पयोव्रतेन मासेन शुद्धः स्यात्। तथा निषिद्धचण्डालादेः सकाशादनिषिद्धभूम्यादिप्रतिग्रहेऽनिषिद्धश्रोत्रियब्राह्मणाच्च निषिद्धकालपुरुषादिप्रतिग्रहे मृगारेष्टिपवित्रेष्टिमित्रविंदेष्टीनामन्यतमा गायत्रीलक्षजपो वा। तदुक्तम्—

"पवित्र्येष्ट्या विशुध्यन्ति सर्वे घोराः प्रतिग्रहाः।
ऐन्द्वेन मृगारेष्ट्या कदाचिन्मित्रविन्दया॥
देव्या लक्षजपेनैव शुद्ध्यते दुःप्रतिग्रहात्"। इति।

अभ्यासे मासमनुवसन् षष्ठे काले पयोभक्षः षण्मासान्ते विप्रांस्तर्पयेत्—

"राज्ञां प्रतिग्रहं कृत्वा मासमप्सु सदा वसेत्।
षष्ठे काले पयोभक्षः पूर्णे मासे प्रमुच्यते॥
तर्पयित्वा द्विजान् कामैः सततं नियतव्रतः"। इति॥

तथा—एतस्मादपि प्रायश्चित्तात्पतितादेः कुरुक्षेत्रे उपरागादौ तु कालपुरुषादिकृष्णाजिनादिप्रतिग्रहे शुद्धिः। सर्वत्रानुक्तौ दातृदेशकालद्रव्यदुष्टेषु द्वादशनिष्कमभागाद्रव्यपरिग्रहे कार्यम्। अनयैव दिशा सर्वद्रव्यानुसारात् प्रायश्चित्तवृद्धिह्रासौ। दातृदेशकालद्रव्यान्तरदोषाय प्रायश्चित्तस्यैकैकगुणवृद्धिः। तथा प्रतिग्राह्यद्रव्याल्पतया प्रायश्चित्ताल्पत्वम्। "मणिवासोगवादीनां प्रतिग्रहे सावित्र्यष्टसहस्रं जपेत्" इति हारीतस्मरणात्।

"भिक्षामात्रे गृहीते तु पुण्यं मन्त्रमुदीरयेत्"। इति॥

तत्पूर्वोक्तं त्रिविधम्—

"नवोत्तमानि चत्वारि मध्यमानि विधानतः ।
अधमानीति शेषाणि त्रिविधत्वमिदं विदुः ॥
अम्लं दधि मधुत्राणगोभूरुक्माणि हस्तिनः ।
दानान्युत्तमदानानि उत्तमद्रव्यदानतः ॥
विद्यार्थिच्छादनावासपरिभोगौषधानि च ।
दानानि मध्यमानीति मध्यमद्रव्यदानतः ॥
उपानत्प्रेङ्खयानानि छत्रपानासनानि च ।
दीपकाष्ठफलादीनि चरमं बहुवार्षिकम् ॥
बहुत्वादर्थजातानां संख्या शेषेषु नेष्यते ।
अधमान्यविशिष्टानि सर्वदान्यान्यतो विदुः" ॥

तथा परिशिष्टे—

"त्रीण्याहुरतिदानानि गावः पृथ्वी सरस्वती" इति ।

एतेषु न दोषः । दोषस्त्वन्यत्रैव—

तिला धेनुर्गजो वाजी प्रेतान्नामजिनं मणिः ।
सुरभी सूयमाणा च घोराः सप्त प्रतिग्रहाः" ॥ इति ।

इदं च प्रायश्चित्तं द्रव्यं दत्त्वैव कर्तव्यम् ।

## अथाभक्ष्यभक्षणे प्रायश्चित्तमभिधीयते ।

तत्र जातिदुष्टलशुनगृञ्जनछत्राकविड्वराहग्रामकुक्कुटप्रभृतीनामबुद्धिपूर्वे सकृद्भक्षणे सान्तपनं प्रायश्चित्तम्, अभ्यासे यतिचान्द्रयणम् । बुद्धिपूर्वमभ्यासे तु सुरापानसमम् । तथा मनुः—

"छत्राकं विड्वराहं च लशुनं ग्रामकुक्कुटम्।
पलाण्डुं गृञ्जनं चैव मत्या जग्ध्वा पतेद् द्विजः॥
अमत्यैतानि षड् जग्ध्वा कृच्छ्रं सान्तपनं चरेत्।
यतिचान्द्रायणं वापि शेषेषूपवसेदहः" ॥ इति।

कामतोऽभ्यासे पातित्यं सुरापानसमत्वम्। अनभ्यासे चान्द्रायणम्। अत एव चान्द्रायणानुवृत्तौ विष्णुः— "लशुनगृञ्जनपलाण्डुविड्वराहग्रामकुक्कुटनरगोमांसभक्षणे च सर्व्वेष्वेतेषु द्विजातीनां प्रायश्चित्तान्ते पुनः संस्कारं कुर्यात्। ब्राह्मणापेक्षया क्षत्रियादिषु पादपादोनं कल्प्यम्।

बुद्धिपूर्वमभ्यासे च बृहद्यमोक्तं द्रष्टव्यम्।

"खट्ववार्ताककुम्भीकव्रश्चनप्रभवाणि च
भूतृणं शिग्रुकं चैव खुरखण्डं कवकानि च।
एतेषां भक्षणं कृत्वा प्राजापत्यं चरेद्द्विजः" इति।

खट्वाख्यः पक्षिविशेषः। अम्बुजमित्यपरे। वार्त्ताकं श्वेतवृन्ताकम्। "कण्डूरं श्वेतवृन्ताकं कुम्भाण्डं च विवर्जयेत्" इति देवलवचनात्। व्रश्चनप्रभवाणि लोहितानि। "लोहितवृक्षनिर्यासात्" इति वचनात्। निर्यासो हिङ्गुकर्पूरादिव्यतिरिक्तः। हिङ्ग्वादीनां भोज्यत्वाभ्यनुज्ञानात्।

"मात्स्यांश्च कामतो जग्वा सोपवासस्त्र्यहं वसेत्" इति।

योगिना सकृद्भक्षणे त्र्यहस्योक्तत्वात्। भूतृणं कृष्णासर्पाख्यं शाकम्। तथा कूर्म्मपुराणे—

"अलाबुं किंशुकं चैव भुक्त्वाप्येतद्व्रतं चरेत्।

औदुम्बरं च कामेन तप्तकृच्छ्रेण शुद्ध्यति" ॥ इति ।

यमोऽपि—

"तन्दुलीयककुम्भीकव्रश्चनप्रभवांस्तथा ।

नालिकां नारिकेरीं च श्लेष्मान्तकफलानि च ॥

भूतृणं शिग्रुकं चैव खट्वाख्यं कवकं तथा ।

एतेषां भक्षणं कृत्वा प्राजापत्यव्रतं चरेत्" ॥ इति ।

नालिका नालिकेरी च शाकविशेषौ । अकामतः सकृद्भक्षणे "शेषेषूपवसेदहः" मनूक्तं द्रष्टव्यम् । अभ्यासे त्वावृत्तिः । अत्यन्ताभ्यासे तप्तकृच्छ्रः । तदुक्तं प्रचेतसा—

"संसर्गदुष्टं यच्चान्नं क्रियादुष्टं च कामतः ।

भुक्त्वा स्वभावदुष्टं च तप्तकृच्छ्रं समाचरेत्" ॥ इति ।

नील्यास्त्वसकृद्भक्षणे चान्द्रायणम् । तथा चापस्तम्बः—

"भक्षयेद्यदि नीलीं तु प्रमादाद्ब्राह्मणः क्वचित् ।

चान्द्रायणेन शुद्धिः स्यादापस्तम्बोऽब्रवीन्मुनिः" ॥ इति ।

तथा च षट्त्रिंशन्मते—

"शतपुष्पं शाल्मलं च करनिर्मथितं दधि ।

बहिर्वेदिपुरोडाशं जग्ध्वा नाद्यादहर्निशम्" ॥ इति ।

तथा च शातातपः—

"लशुनं गृञ्जनं जग्ध्वा पलाण्डुं च तथा शुनीम् ।

छत्राकं विड्वराहं च ग्राम्यं कुक्कुटमेव च ॥

उष्ट्रीं वा महिषीं भासीं रासभीक्षीरभोजनात् ।

उपनयनं पुनः कुर्यात् तप्तकृच्छ्रं चरेन्मुहुः" ॥

तथा च पराशरः—

"पीयूषं श्वेतलशुनं वृन्ताकं फलगृञ्जनम् ।
पलाण्डुं वृक्षनिर्यासं देवस्वकवकानि च" ॥ इति ।

अभिनवं पयः पीयूषम् । तस्याभिनवत्वं प्रसवकालीनत्वम् । दशाहान्तःपातित्वं वा । दशाहादूर्द्धमपि प्रसवप्रयुक्तरक्तार्द्रतासद्भावकालीनत्वं वा । श्वेतशब्दो लशुनवृन्ताकाभ्यां सम्बध्यते । ततश्च रक्तो लशुनः कृष्णं च वृन्ताकं भक्ष्यम् । गृञ्जनं चात्र रक्तकन्दविशेषः । पत्रविशेषो वा गायककण्ठशुद्ध्युपयोगी विषलिप्तशस्त्रहतमृगमांसं वा । अत्र केचित् "गृञ्जनं रक्तकन्दविशेषो गर्जरापरपर्यायः पलाण्डुविशेष एवेति । तन्न—

"वर्णगन्धरसैरन्यो गृञ्जनस्तु पलाण्डुना ।
पर्णाग्रमूलसूक्ष्मत्वाद्भिद्यतेऽसौ पलाण्डुतः" ॥ इति ।

यत्तु पराशरस्मृतिव्याख्याने श्रीपादा व्याख्यातवन्तो मूलविशेषो वा गाजरापरपर्याय इति । तद् भिक्षाशनमात्रं कुर्वन्तो भक्ष्याभक्ष्यमजानन्तो भिक्षाशनेनायुषः क्षयं परीक्षन्त आयुर्वेदपरीक्षाक्षमाः शास्त्रपाठमात्ररताः किं वाच्याः। तथाहि—वायुपुराणे भक्ष्यं प्रक्रम्योक्तम्—

"वैकङ्कतं नालिकेरं शृङ्गाटकपरूषके ।
पिप्पलीं मरिचं चैव पटोलं बृहतीफलम् ॥
नारङ्गं चात्र वै देयं दीर्घमूलकमेव वा" ।

मूलकमपि चतुर्विधम् । तदभिहितं धन्वन्तरिप्रणीतायुर्वेदनिघण्टौ—

"मूलकं हरिवर्णं च मूत्रिकाक्षारसेवितम् ।

नीलकन्दं महाकन्दं रुचिष्यं हस्तिदन्तकम् ॥
चाणाख्यमूलकं चान्यच्छालेयं मरुसम्भवम् ।
शालामर्कटकं मिश्रं विष्णुगुप्तमतं तथा ॥
चतुर्थमूलकं चान्यन्निर्दिष्टं तद्धि गाजरम् ।
पीतकं मधुरं स्वादु तच्च नारङ्गवर्णकम्" ॥

गृञ्जनविषयेऽप्युक्तं राजनिघण्टुकृता—

"रसोनो लशुनोऽरिष्टो म्लेच्छकन्दो महौषधम् ।
महाकन्दो रसोनोऽन्यो गृञ्जनो दीर्घपत्रकः ॥
पलाण्डुर्यवनेष्टश्च लतार्को दुर्द्रुमः स्मृतः" ।

तथाऽन्यत्र । सुश्रुते—

"लशुनो दीर्घपत्रश्च पिच्छगन्धो महौषधम् ।
फरणाश्च पलाण्डुश्च लतार्कश्चापराजिता ॥
गृञ्जनो यवनेष्टश्च पलाण्डोर्दश जातयः" ।

सुश्रुतेऽन्यदप्युदाहृतम्—

"तीक्ष्णो गृञ्जनको ग्राही पित्तिनां हितकृन्न सः"॥ इति ।

तथा प्रकारान्तरेणापि—पलाण्डुभेदमभिदधता सम्यङ्—निरूपितम् ।

"विषलिप्तेन शस्त्रेण मृगो यः परिहन्यते ॥
अभक्ष्यं तस्य तन्मांसं तद्धि वै गृञ्जनं स्मृतम्" ॥ इति ।

इदं च महता प्रबन्धेन सुश्रुते निरूपितम् । अतस्त्वज्ञानविधुराः परमद्वेषिण एव शास्त्रानभिज्ञा गाजरमेव गृञ्जनं मन्यन्ते ।

तदुक्तं वाक्यमीमांसायाम्—"सुश्रुतोक्तरक्तालविषये तालकस्य-

गृञ्जनशब्दस्य गाजरविषये गाजरत्वमन्धपरंपरान्यायेन मन्यमाना गाजरमभक्ष्यं मन्यन्ते" इति।

अथ क्षीरादिभक्षणे गोजामहिषीवर्जं सर्वस्त्रीपयांस्यनिर्दशादेतान्यपि च स्यन्दिनीयमसूसन्धिनीविवत्साक्षीरं चामेध्यभुजश्च दधिवर्जं ब्रह्मचर्याद्याश्रमी भक्षयित्वा श्रद्धावांस्त्रिरात्रमुपवसेत्। तथोक्तम्—

"स्त्रीक्षीरं तु पयः पीत्वा कथंचित्काममोहितः।
पुनः संस्कृत्य चात्मानं प्राजापत्यं समाचरेत्॥
अजोष्ट्रीसन्धिनीक्षीरं मृगाणां वनचारिणाम्।
अनिर्दशाहगोश्चैव पीत्वा दिनमभोजनम्॥
अनिर्दशाया गोः क्षीरमौष्ट्रमैकशफं तथा।
आविकं सन्धिनीक्षीरं विवत्सायाश्च गोः पयः॥
आरण्यानां च सर्वेषां मृगाणां महिषीं विना।
स्त्रीक्षरं चैव वर्ज्यानि सर्वशुक्लानि चैव हि॥
दधि भक्ष्यं च शुक्लेषु सर्वं च दधिसम्भवम्"॥ इति।

तथा पैठीनसिः—"अविखरोष्ट्रमानुषीक्षीरप्राशने तप्तकृच्छ्रः पुनरुपनयनं च। अनिर्दशाहगोमहिष्याश्च क्षीरप्राशने षड्रात्रमभोजनम्" इति। तथा शातातपः—

"उष्ट्रक्षीरमविक्षीरमन्नं वा मृतसूतके।
चौरस्यान्नं नवश्राद्धं भुक्त्वा चान्द्रायणं चरेत्" इति॥

शङ्खः—"सन्धिन्यमेध्यभक्षयोः क्षीरप्राशने पक्षव्रतम्"इत्यभ्यासे।

विष्णुः—“गोजामहिषवर्जं सर्वाणि पयांसि प्राश्योपवसेत्” इति सकृत्पाने। तथा ब्रह्मपुराणे—

“येन क्षीरघृतान्मण्डं पीयूषमथवा द्वयोः।
पशुक्षीरमथाद्यं च दुष्टायाश्चैव गोः पयः॥
अनिर्दशायाश्च तथा सन्धिन्याश्च तथैव च।
सगुडं मरिचाक्तं तु तथा पर्युषितं दधि॥
जीर्णतक्रमपेयं स्यात् नष्टस्वादं च फेनवत्।
प्रमादाद्भक्षितैरेभिर्वने पक्षव्रतं चरेत्॥
भुक्त्वा तु क्षीरलवणं त्रिरात्रं तु वने वसेत्”।

शूद्रस्य कपिलाक्षीरपाने पातकं प्रायश्चित्तं चान्द्रायणं ज्ञेयम्।

स्वभावदुष्टमांसभक्षणे प्रायश्चित्तमभिधीयते। यत्राकामतः सकृद्भक्षणे “शेषेषूपवसेदहः” इति मानवम्। कामतस्तु “त्र्यहमुपवसेत्” इति याज्ञवल्कीयं व्रतम्। कामतोऽभ्यासे—“सप्तरात्रं यवान् पिबेत्” इति मानवम्। तत्र मांसं द्विविधमेवाभक्ष्यं विट्शूकरादेः स्वभावदुष्टमेकम्, अनुपातकक्छागादिमांसं द्वितीयम्। बृहद्यमः—

“वराहैकशफानां च ग्रामकुक्कुटयोस्तथा।
क्रव्यादीनां च सर्वेषामभक्ष्याः ये च कीर्तिताः”॥ इति।

तथा च मनुः—

“क्रव्याद्विट्शूकरोष्ट्राणां कुक्कुटानां च भक्षणे।
नरकाकखरोष्ट्राणां तप्तकृच्छ्रं विशोधनम्”॥ इति।

एषां मूत्रपुरीषप्राशने बृहद्व्यासोक्तं द्रष्टव्यम्।

"मांसमूत्रपुरीषाणि प्राश्य गोमांसमेव वा ।
श्वगोमायुकपीनां तु तदा कृच्छ्रो विधीयते ॥
उपोष्य द्वादशाहं तु कूष्माण्डैर्जुहुयाद्घृतम्" ॥ इति ।

तत्र कामतस्तप्तकृच्छ्रम्, अभ्यासे कूष्माण्डसहितः पराकः । कामतोऽभ्यासे आङ्गिरसा विशेष उक्तः—

"नरकाकखराश्वानां जग्ध्वा मांसं गजस्य च ।
एषां मूत्रपुरीषाणि द्विजश्चान्द्रायणं चरेत्" ॥ इति ।

मूत्रपुरीषग्रहणं वसाशुक्रासृङ्मज्जानामप्युपलक्षणम् । मूत्रपुरीषे गोमूत्रपुरीषव्यतिरिक्ते । कामतोऽत्यन्ताभ्यासे—

"भुक्त्वा चोभयतो दन्तांस्तथा चैकशफानपि ।
औष्ट्रं गव्यं तथा जग्ध्वा षाण्मासान् व्रतमाचरेत्" ॥ इति ।

औष्ट्रं गव्यं च मांसमित्यर्थः । नरविड्वराहखरगवाश्वकुञ्जरोष्ट्रसर्वपञ्चनखाजमहिषमांसभक्षणेऽत्यन्तानवच्छिन्नाभ्यासे वार्षिकव्रतम् । केशनखरुधिरप्राशने बुद्धिपूर्वे त्रिरात्रमज्ञानादुपवासः । तत्र—अज्ञानतः सकृन्नखकेशश्मश्रुभक्षणेऽहोरात्रमभोजनाच्छुद्धिः । मुखमात्रप्रवेशे हेमतप्तघृतप्राशनाच्छुद्धिः ।

"केशकीटनखं प्राश्य मत्स्यकण्टकमेव च ।
हेमतप्तं घृतं पीत्वा तत्क्षणादेव शुद्ध्यति" ॥ इति स्मरणात् ।

हारीतः—"कृमिकीटकजलौकापतङ्गास्थिप्राशने गोमूत्रगोमयाहारे त्रिरात्रेण शुद्धिः । प्रचेताः—

"अन्ने भोजनकाले तु मक्षिकाकेशदूषिते ।
अनन्तरं स्पृशेदापः तच्चान्नं भस्मना स्पृशेत्" ॥ इति ।

तथा विष्णुरपि—"तदन्नं भस्मना मृदा वा स्पृशेत् । अङ्घ्रिदूषिते स्नानं घृतप्राशनं च दन्तपातेऽपि स्नानघृतप्राशने । रक्तादिदृष्टिश्चेदहोरात्रमुपवासः। मुखे दृष्टौ त्रिरात्रमुपवासः। भक्ते ब्राह्मीरसो जले कुशोदकम् [ पेयमित्यर्थः ] ।

अथ मेध्यामेध्यविचारः—मेध्यं चतुर्विधममेध्यं च । तत्राद्यं शुचिः पूतं स्वयं शुद्धं पवित्रं च । तत्र नवं निर्म्मलं द्रव्यं शुचिशुद्धम् । पवित्रभूतं पूतमुच्यते । अमेध्यं चतुर्विधम्—दूषितं कश्मलं दुष्टं वर्जितं चेति । शुचिद्रव्यमशुचिस्पृष्टं दूषितम् । विष्ठापूयादि कश्मलम् । आर्द्रचर्मादि दुष्टं याचितप्रभृति वर्जितमिति । तत्राद्यं ग्राह्यं द्वितीयं त्याज्यमिति ।

अथ बिडालाद्युच्छिष्टभक्षणे प्रायश्चित्तम्—तत्रामत्या श्वकाकपक्षिश्वापदमूषकबिडालनकुलोच्छिष्टभूयस्यन्ने रसमेव जग्ध्वा केशाद्यावपनं देवद्रोण्यादौ द्रव्यशुद्धिः । संस्काररहितः सुवर्च्चलां ब्राह्मीमेकरात्रं पिबेत् । कामतश्च द्विगुणम् । अल्पद्रव्ये चेदमभ्यासे कृच्छ्रम् । अत्यन्ताभ्यासे पक्षं यावकव्रतम् । तदाह बृहस्पतिः—

"अभोज्यानां च भुक्त्वान्नं स्त्रीशूद्रोच्छिष्टमेव च ।
जग्ध्वा मासमभक्ष्यं च सप्तरात्रं यवान्पिबेत्" ॥ इति ।
"बिडालकाकाखूच्छिष्टं जग्ध्वा श्वनकुलस्य च ।
केशकीटावपन्नं च पिबेद् ब्राह्मीं सुवर्चलाम्" ॥ इति ।

कालविशेषानुपादानेऽकामकृते एकरात्रम्, कामतश्चेत्पादकृच्छ्रः। तदाह विष्णुः—

"पक्षिश्वापदजग्धस्य रसस्यान्नस्य भूयसः ।

संस्काररहितस्यापि भोजने कृच्छ्रपादकम्" ॥ इति ।

अभ्यासे शङ्खः—

"शुनामुच्छिष्टकं भुक्त्वा मासमेकं व्रती भवेत् ।
काकोच्छिष्टं गवाघ्रातं भुक्त्वा पक्षं व्रती भवेत्" ॥ इति।

अत्र प्रकृतं पाकव्रतम् ।

बृहद्विष्णुः—ब्राह्मणः शूद्रोच्छिष्टान्नभोजने सप्तरात्रं पञ्चगव्यं पिबेत्, वैश्योच्छिष्टाशने पञ्चरात्रं राजन्योच्छिष्टाशने त्रिरात्रं ब्राह्मणोच्छिष्टाशने त्वेकाहम्" इति । इदं व्रतं कामकृतापराधे सकृद्भक्षणे । आहारान्तरनिवृत्या पञ्चगव्यप्राशनमेव । तपसो हि कष्टरूपत्वात् ।

"भुक्त्वा सह ब्राह्मणेन प्राजापत्येन शुद्ध्यति ।
भूभुजा सह भुक्त्वान्नं तदा कृच्छ्रेण शुद्ध्यति ॥
शूद्रेण सह भुक्त्वान्नं चान्द्रायणमथाचरेत्" । इति ।

अभ्यासे यमोक्तं द्रष्टव्यम् ।

अकामतश्च ब्राह्मणोच्छिष्टाशने महाव्याहृतिभिरभिमन्त्र्यापः पिबेत् । क्षत्रियोच्छिष्टाशने ब्राह्मीरसविपक्वेन क्षीरेण त्र्यहं वर्तयेत् । वैश्योच्छिष्टभोजने त्रिरात्रोपोषितो ब्राह्मीं सुवर्चलां पिबेत् । शूद्रोच्छिष्टभोजने षड्रात्रमभोजनम्" इति शङ्खाभिहितं द्रष्टव्यम् ।

अत्यन्ताभ्यासे द्वैगुण्यादिकल्पनया ज्ञेयम् । आपस्तम्बस्तु क्वचिदुच्छिष्टभोजनस्याभ्यनुज्ञां दर्शयति स्म—"पितुर्ज्येष्ठस्य च भ्रातुरुच्छिष्टं भोज्यम्" इति । ततश्च व्रतस्थब्रह्मक्षत्रियवैश्यशूद्रोच्छिष्टे तु ब्राह्मण एकत्रिपञ्चसप्तरात्राणि पञ्चगव्यं पिबेत् । अ-

भ्यासे त्वेषामावृत्तिः कल्प्या । कामतश्चेद्भुक्तिस्तान्येव शुद्धोपवासानि कुर्यादिति । ज्ञानतोऽभ्यासे कायातिकृच्छ्रतप्तकृच्छ्रचान्द्रायणानि कल्प्यानि ।

क्षत्रियादौ पादं ह्रासयेत् । तथाच वशिष्ठः—"श्वकाकावलीढशूद्रोच्छेषणभोजने त्रिरात्रं प्राणायामत्रयं कृत्वा घृतं प्राश्य विशुद्ध्यति" इति । तथा शातातपः—"श्वकाकाद्यवलीढशूद्रोच्छेषणभोजने त्वतिकृच्छ्रः" इति । शूद्रोच्छेषणं नाम यस्यान्यस्याग्रे शूद्रदत्तं भोजनं शूद्रेण सहैकपङ्क्त्या भोजनं वा । तथा शङ्खोऽपि—

"शूनामुच्छिष्टकं भुक्त्वा मासमेकं व्रती भवेत् ।
काकोच्छिष्टं गवाघ्रातं भुक्त्वा पक्षं व्रती भवेत्" ॥ इति ।

आपस्तम्बः—

"पितुर्ज्येष्ठस्य तु भ्रातुरुच्छिष्टं भोज्यमब्रवीत्" इति ।

सहभोजनं बृहद्व्यासेन निषिध्यते—

"माता वा भगिनी वाऽपि भार्या वाऽन्याश्च योषितः ।
न ताभिः सह भोक्तव्यं भुक्त्वा चान्द्रायणं चरेत्" ॥ इति ।

विवाहेऽङ्गिरसा विशेष उक्तः—

"ब्राह्मण्या सह योऽश्नीयादुच्छिष्टं वा कदाचन ।
तत्र दोषं न मन्यन्ते सर्व एव मनीषिणः" ॥ इति ।

विष्णुः—

"मध्विक्षुरसलवणानि सहस्रदत्तानि भुञ्जीयात्" । इति ॥

"एकपङ्क्त्युपविष्टानां विषयं यः प्रयच्छति ।
वञ्चयित्वाप्यसौ भुङ्क्ते कुर्याद्ब्रह्महनव्रतम्" ॥ इति ।

पराशरः—

"एकपङ्क्त्युपविष्टानां विप्राणां सहभोजने ।
यद्येकोऽपि त्यजेत्पात्रं शेषमन्नं न भोजयेत् ॥
मोहाद् भुञ्जीत यः कश्चित्स पङ्क्त्युच्छिष्टभोजनः ।
प्रायश्चित्तं चरेद्विप्रः कृच्छ्रं सान्तपनं तथा" ॥ इति ।

"आमश्राद्धाशने मासव्रतम्" इति विष्णुः । आमश्राद्धं नवश्राद्धम् ।

हारीतः—"वज्रिलोहकारभोजने भगवृत्तिपुंश्चलीवेश्यान्नभोजने सप्तरात्रं दुष्कृतिगरदतस्करान्नभोजने दशरात्रम्" इति । भार्यां भगिनीं वान्यस्मै दत्त्वा यो धनं गृह्णाति स भगवृत्तिः । दीक्षितप्रव्रजितगणावरुद्धान्नभोजने चान्द्रायणम् । मृतकान्नभोजने दशरात्रेण शुद्धिः । दीक्षितोऽग्निष्टोमीयपशुध्वंसपर्यन्तमभोज्यान्नः । प्रव्रजितो यतिः । गणः सङ्घः । अवरुद्धः कारागृहादौ यन्त्रितः ।

ब्रह्मपुराणे—

"योगो मघात्रयोदश्याः कुञ्जरच्छायसंज्ञकः ।
भवेन्मघायां सिंहे च शशिन्यर्के करे स्थिते ॥
मृतके सूतके वाथ भुक्त्वा तु नरकं व्रजेत् ।
भुक्त्वा प्रमादाद्विप्रस्तु सम्यक् चान्द्रायणं चरेत्" ॥ इति ।

तथा यतिलिङ्गिपाखण्डस्त्रीजितान्नं नाश्नीयात्, शूद्रानुमन्त्रितं ब्राह्मणान्नं ब्राह्मणानुमन्त्रितं शूद्रान्नं च नाश्नीयात् ।

"सावज्ञास्यापि मूर्खस्यासत्कारस्याथ दुर्म्मतेः ।
असंस्कृतमविज्ञातं सरोषं विस्मयान्वितम् ।

अश्रद्धया हुतं दत्तं भुक्त्वान्नं ब्रह्महा भवेत् ॥
असच्छूद्रार्थपकान्नं नाद्यादश्रद्धयाहितम् ।
यस्याग्निकार्यं न गृहे नाग्रभुक् ब्राह्मणो यथा ॥
तद्गृहे नान्नमश्नीयात् प्रवासिन्यग्निहोत्रिणि ।
एतेषां च गृहे भुक्त्वा वने चान्द्रायणं चरेत्" ॥ इति ।

शातातपः —

"योऽगृहीत्वा विवाहाग्निं गृहस्थ इति मन्यते ।
अन्नं तस्य न भोक्तव्यं वृथापाको हि स स्मृतः ॥
वृथापाकस्य भुञ्जानः प्रायश्चित्तं चरेद्द्विजः ।
प्राणायामं त्रिरायम्य घृतं प्राश्य विशुद्ध्यति" ॥ इति ।

पराशरः—

"आपत्काले तु विप्रेण भुक्तं शूद्रगृहे यदि ।
मनस्तापेन शुद्ध्येत्तु द्रुपदायाः शतं जपेत् ॥
सूतके तु यदा विप्रो ब्रह्मचारी विशेषतः ।
पिबेत् पानीयमज्ञानात् समश्नीयात् स्पृशेत वा ॥
पानीयपाने कुर्वीत पञ्चगव्यस्य भक्षणम् ।
त्रिरात्रं भोजने प्रोक्तं स्पृष्ट्वा स्नानं विधीयते" ॥ इति ।

दीपोच्छिष्टं तैलं रात्रौ रथ्याहृतं च भुक्त्वा नक्तं कुर्यात् । पीतावशिष्टे मुखनिर्गतपाने मत्याभ्यासे चान्द्रपराके वा कुर्यात् । पीतावशिष्टमात्रेऽम्बुपाने वामहस्तेन च त्रिरात्रं व्रतम् । अकामतस्तदर्धम् । भाण्डस्थैः केशपिपीलिकामेध्यकीटैरुपहते तावन्मात्रमुद्धृत्य मृद्भस्मताम्रवैदूर्यहिरण्यरजतादिगोबालदर्भयुक्ते उष्णवारिणा

शेषं प्रोक्षयेत्। एवंभूतं हस्तस्थितं यद्भवेत्तदा त्यजेत् शुष्कस्थं निष्ठाव्य घृतं पिबेत्।

"अलेह्यापेयचण्डालाद्यन्ने वर्णा यथाक्रमम्।
तप्तकृच्छ्राणि कृच्छ्राणि तानि कुर्युरकामतः" ॥

कामतश्चेत् चान्द्रतप्तकृच्छ्रातिकृच्छ्रकायानि स्युः पुनः संस्कारोऽस्य, यथा मनुष्यरेतोविण्मूत्रभक्षणे वर्णा एवमेव कुर्युः। चण्डालश्वपचसूतवैदेहकमागधाद्या अन्त्याः। तदन्नभोजनेऽप्येवम्। अन्त्यभुक्तशेषं भुक्त्वा वर्णाश्चान्द्रकायतदर्धपादं कुर्युः। अन्त्योच्छिष्टभक्षणे चान्द्रं महासान्तपनं षड्रात्रं त्रिरात्रं वा कुर्युः। अभ्यासे द्विगुणं व्रतम्। अत्यन्ताभ्यासे पातित्यमेव। आमग्रहणे त्वर्द्धम्। तदुच्छिष्टभोजने द्विगुणम्, सहभोजने त्रिगुणम्, अभ्यासे पतनमिति।

संसर्गस्वभावक्रियादुष्टमन्नं भुक्त्वा चान्द्रम्। क्लिन्ने भिन्ने उदके वा शवे यन्त्रोदकपाने चान्द्रम्। कूपे शवे पतिते तदुदकपाने त्रिरात्रेण शुद्धिः। आपस्तम्बः—

"चाण्डालकूपभाण्डस्थं नरः कामाज्जलं पिबेत्।
प्रायश्चित्तं कथं तत्र वर्णे वर्णे विनिर्दिशेत्॥
चरेत्सान्तपनं विप्रः प्राजापत्यं तु भूमिपः।
वैश्यस्त्र्यहेण शुद्ध्येत शुद्रस्त्वेकेन शुद्ध्यति" ॥ इति।
"म्लेच्छादीनां जलं पीत्वा पुष्करिण्यां ह्रदेऽपि वा।
जानुदघ्नं शुचि ज्ञेयमधस्तादशुचि स्मृतम्॥
तत्तोयं यः पिबेद् विप्रः कामतोऽकामतोऽपि वा।
अकामं नक्तभोजी स्यादहोरात्रं तु कामतः" ॥ इति।

तथान्त्यजभाण्डस्थोदकं दधि पयः पीत्वा द्विजा ब्रह्मकूर्चोपवासेन शुद्ध्येयुः । शूद्रस्योपवासेन शुद्धिः। कामतो द्विगुणम् । कामतोऽभ्यासे त्रिगुणमिति । वाग्दुष्टभावदुष्टभोजने त्रिरात्रेण शुद्धिः । चाण्डालोदकस्नाने प्राजापत्यम् । चाण्डालभाण्डस्थितपाने द्विजानां ब्रह्मकूर्चोपवासः शूद्रस्य दानोपवासाविति ।

"मूत्रोत्सर्गं द्विजः कृत्वा ह्यकृत्वा शौचमात्मनः ।
मोहाद् भुक्त्वा त्रिरात्रं च यवान्पीत्वा विशुद्ध्यति ॥
मूत्रं कृत्वा द्विजो मार्गे स्मृतिभ्रंशाज्जलं पिबेत् ।
अहोरात्रोषितो भूत्वा पञ्चगव्येन शुद्ध्यति ॥

मत्या द्विगुणम् । संवर्त्तः—

"समुत्पन्ने तु यः स्नाने भुञ्जीताथ पिबेत्तु वा ।
गायत्र्यष्टसहस्रं तु जपेत्स्नात्वा समाहितः" ॥ इति ।

तथाज्ञानदुर्बलस्नानार्द्रश्चेद्भुङ्क्ते प्राजापत्येन शुद्ध्यति" ।

अथ कालदुष्टभक्षणे। कालदुष्टं पर्युषितान्नादि । पर्युषितमप्यस्नेहाक्तम् । अस्नेहाक्तमपि यवगोधूमयोः शूद्रभाजनभिन्नभाजनयोर्भुक्त्वाऽहोरात्रेणोपवासे पञ्चगव्येन शुद्धिः ।

वटार्काश्वत्थकुम्भीतिन्दुककोविदारकदम्बकपलाशपद्मपर्णेषु भुक्त्वा चान्द्रायणं कुर्यात् । यतिवनस्थौ तद्भेते इति ।

पराशरः—

"शूद्रसूतकयभोज्यांशविमतिपिद्धपूर्वोच्छिष्टान्नं न भोज्यम्" ।

तदाहाङ्गिराः—

"आहिताग्निस्तु यो विप्रः शूद्रान्नं प्रतिगृह्य तु ।

भोगात्तामसतां याति तिर्यग्योनिं च गच्छति ॥

यस्तु वेदधीयानः शूद्रान्नमुपभुञ्जति।

शूद्रो वेदफलं याति शूद्रत्वं चाधिगच्छति ॥

आमं वा यदि वा पक्वं शूद्रान्नमुपसाधयेत् ।

किल्विषं भजते भोक्ता यश्च विप्रः पुरोहितः" ॥ इति ।

शङ्खः—

"यस्तु भुञ्जति शूद्रान्नं मासमेकं निरन्तरम् ।

इह जन्मनि शूद्रत्वं मृतः श्वा चाभिजायते" ॥ इति ।

व्यासः—

"शूद्रान्नरसतुष्टस्य दित्सोरपि च नित्यशः ।

यजतो जुह्वतो वापि गतिरूर्द्धा न विद्यते ॥

मृतसूतकपुष्टाङ्गो द्विजः शूद्रान्नभोजनः ।

अहमेव न जानामि कां कां योनिं स गच्छति ॥

गृध्रो द्वादशजन्मानि दशजन्मानि सूकरः ।

श्वा चैव सप्तजन्मानीत्येवं मनुरुवाच ह" ॥ इति ।

योगी—"कदर्यबद्धचौरक्लीबगणगणिकादीनामन्नमभोज्यम्" इति, पतिताभिशस्तग्रामयाजकसर्वाभोज्यानामभोज्यत्वे काकाद्युपहतस्याभोज्यत्वे उक्तेऽपि बालकाद्युच्छिष्टस्य स्वल्पशुद्ध्यां भोज्यत्वमाह—

"बालैर्नकुलमार्जारैरन्नमुच्छेषितं यदा ।

तिलदर्भोदकैः प्रोक्ष्य शुद्ध्यते नात्र संशयः" ॥ इति ।

अथ कालकृताशुद्धादिभोजने कामाकामभेदेनैकरात्रत्रिरात्रादि कल्प्यम् । तथाग्रावहुतमग्रेऽदत्तं च न भोज्यम् ।

अथ हस्तादानादिक्रियादुष्टभक्षणे पराशरः—'माक्षिकफाणितकगोरसलवणघृतप्रभृति हस्तदत्तं भुक्त्वाऽहोरात्रमुपवासः। कामतस्तु हस्तदत्तभोजनेऽब्राह्मणसमीपभोजने दुष्टपङ्क्त्यग्रभोजने पङ्क्त्यदुष्टपङ्क्तिभोजने भुक्तमूत्रपुरीषकरणे मृतसूतकशूद्रान्नभोजने शूद्रैः सह स्वप्ने त्र्यहमुपवासः। पर्यायदानदुष्टे याज्ञवल्कीयं व्रतम्—

"ब्राह्मणान्नं ददच्छूद्रः शूद्रान्नं ब्राह्मणो ददत्।
द्वयमेतदभोज्यं स्याद् भुक्त्वा तूपवसेदहः" ॥ इति।

शूद्रहस्तभोजनपानीययोरहोरात्रमुपोष्य पञ्चगव्येन शुद्धिः। आसनारूढपादेन वस्त्रार्धप्रावृतेन मुखेनान्नं धमित्वा भोजने सान्तपनकृच्छ्रः। पार्वणश्राद्धभोजने षट् प्राणायामाः। अतिथौ द्वारि तिष्ठति, उदकपाने चान्द्रायणव्रतम्। त्रिमासादिवत्सरश्राद्धपर्यन्तभोजने उपवासः। वृद्धौ प्राणायामात्रयम्। सपिण्डनेऽहोरात्रम्। ग्रासरूपे नक्तम्। क्षत्रियभोजने द्विगुणम्। वैश्ये त्रिगुणम्, शूद्रे चतुर्गुणमिति। इदमामश्राद्धविषयमापद्यकामविषयं वा।

विष्णुः—"नवश्राद्धे प्राजापत्यम्, आद्यमासिके पादोनम्, त्रिपक्षिके तदर्द्धम्, द्विमासिके पञ्चगव्यम्, अनापद्यपि नवश्राद्धे चान्द्रायणम्, मिश्रके प्रथममासिके प्रथमसांवत्सरिके वा प्राजापत्यम्। संवत्सरानन्तरश्राद्धे एकाहः प्रायश्चित्तम्। तथा शङ्खः—

"आब्दिके पादकृच्छ्रः,पुनराब्दिके एकाहः" इति। हारीतोऽप्येवम्।

चण्डालाद्युच्छिष्टस्पृष्टे कांस्यभाजने कृच्छ्रो मृण्मयेऽतिकृच्छ्रः। रजकाद्युच्छिष्टस्पृष्टे तदर्द्धम्। चण्डालादिसंस्पृष्टान्नभोजने त्रिरात्रम्। चण्डालादिस्पृष्टान्नदाने तूपवासः पञ्चगव्यं च। चण्डालादिहस्तभो-

जने कार्यं चान्द्रं वा । चण्डालाद्युच्छिष्टभोजने चतुर्गुणम् । चण्डालादिहस्ताम्बुपाने तूपवासः । चण्डालाद्युच्छिष्टस्पृष्ट उपवासः । मृतसूतकसम्पर्के क्रतुं दृष्ट्वा स्नानकालेन भोजनं कुर्यात् । मत्या भुक्त्वा चान्द्रम् । चण्डालादिसङ्करे भुक्त्वा पक्षं गोमूत्रयावकं कृच्छ्रं वा । चाण्डालाद्यपाने कार्यं तदर्धं वा । चाण्डालादिभाण्डस्पृष्टाम्बुपाने गोमूत्रयावकं त्रिरात्रम्। चाण्डालादिस्वीकृततीर्थतडागादिष्वबुद्धिपूर्वं पीत्वा पञ्चगव्यपानम् । चण्डालादिर्यस्य गृहेऽज्ञानतस्तिष्ठति तस्यान्नमत्या भुक्त्वा कार्यं चान्द्रम् । मत्या पराकः, भुक्तोच्छिष्टचण्डालादिस्पर्शे कार्यं गायत्र्यष्टसहस्रं द्रुपदां शतं वा। वामहस्तनिर्मुक्तपात्रान्तभुक्तौ सान्तपनम् । आमश्राद्धे तप्तकृच्छ्रं प्रतिसंवत्सरे दशकृत्वोऽम्बुपानम् । यः पञ्च यज्ञान्स्वयं विधाय सततं प्रातरुत्थाय परपाकरत एव स परपाकः शुचिरिति ।

प्रौढश्रीद्विजराजवंशतिलकालङ्कारहीरः प्रभु-
र्भारद्वाजकुलानुगः प्रथमया यः शाखयालङ्कृतः ।
श्रीमद्वल्लभसूनुरात्मनिरतः सत्सम्प्रदायाग्रणीः
सारेऽस्मिन्व्रतचर्यसंज्ञक इह श्रीमान्दलाधीश्वरः ॥ १ ॥
निजामशाहसाम्राज्यधुरन्धरमहीपतिः ।
श्रीनृसिंहप्रसादेऽस्मिन् सपूर्णां कुरुते शुभम् ।

इति श्रीमल्लक्ष्मीनृसिंहचरणयुगलसरोरुहभ्रमरसकलभूमण्डलमण्डनसमस्तयवनाधीश्वरश्रीनिजामशाहसमस्तसाम्राज्यधुरन्धरश्रीमन्महाराजाधिराजश्रीदलपतिराजविरचिते श्रीनृसिंहप्रसादे प्रायश्चित्तसारे मेध्यामेध्यविचारः ।

## अथ जातिभ्रंशकरादिप्रायश्चित्तम् ।

अथ जातिभ्रंशकरादि तत्स्वरूपं मनुनोक्तम्—

"ब्राह्मणस्य रुजः कृत्यं घ्रातिरघ्रेयमद्ययोः ।
जैह्म्यं पुंसि च मैथुन्यं जातिभ्रंशकरं स्मृतम् ।
खराश्वोष्ट्रमृगेभानामजाविकवधस्तथा ।
सङ्करीकरणं ज्ञेयं मीनाहिमहिषस्य च ॥
निन्दितेभ्यो धनादानं वाणिज्यं शूद्रसेवनम् ।
अपात्रीकरणं ज्ञेयं असत्यस्य च भाषणम् ॥
कृमिकीटवयोहत्या मद्यानुगतभोजनम् ।
फलैधःकुसुमस्तेयमधैर्यं च मलावहम्" ॥ इति ।

रुजःकृत्यं रोगोत्पाटनादि । अधैर्यं पूतिगन्धिः । मलावहं मलिनीकरणम् । तत्र जातिभ्रंशकरे विष्णुना प्रायश्चित्तमभिहितम्—

"जातिभ्रंशकरं कर्म्म कृत्वान्यतममिच्छया ।
चरेत्सान्तपनं कृच्छ्रं प्राजापत्यमनिच्छया ॥
सङ्करापात्रकृत्यासु मासं शोधनमैन्दवम् ।
मलिनीकरणीयेषु तप्तः स्याद्यावकस्त्र्यहम्" ॥

तथा गुरुः—

"ब्राह्मणस्य रुजःकृत्या राजसभादिप्रमापणम् ।
निन्दितेभ्यो धनादानं कृच्छ्रार्धं व्रतमाचरेत्" ॥

यमः—

"सङ्करीकरणं कृत्वा मासमश्नीत यावकम् ।

कृच्छ्रातिकृच्छ्रमथवा प्रायश्चित्तं समाचरेत् ॥
अपात्रीकरणं कृत्वा तप्तकृच्छ्रेण शुद्ध्यति ।
शीतकृच्छ्रेण वा शुद्धिर्महासान्तपनेन वा ॥
मलिनीकरणीयेषु तप्तकृच्छ्रं विशोधनम्" इति ।

एवमादीनि जातिशक्त्याद्यपेक्षया योज्यानि ।

"कृमिकीटवयोहत्या मद्यानुगतभोजनम् ।
फलैधःकुसुमस्तेयमधैर्यं च मलावहम्" ॥ इति ।

अत्र कृमयः स्थविष्ठा अस्थिरहिता उक्ताः । इतोऽपि स्तोदिष्ठानस्थिजन्तुहनने योगी—

"अस्थिमतां सहस्रं तु तथानस्थिमतामनः" ॥ इति ।

अत्र च षाण्मासिकं व्रतं भवति । शूद्रहत्यामित्यनुवृत्तेः । अस्थिमन्तस्त्वनुक्तनिष्कृतयः कुक्कुरादयः । अनस्थिमन्तो यूकामशकादयः । अनः शकटम् । अत्रोक्तसंख्यापरिमाणापेक्षयान्यूनाधिकहनने प्रायश्चित्तमपि तथैव कल्पनीयम् । तथा—

"मार्जारगोधानकुलमण्डूकांश्च पतत्रिणः ।
हत्वा त्र्यहं पिबेत्क्षीरं कृच्छ्रं वा पादिकं चरेत्" ॥

इत्येतदकामविषयम् । कामतो द्विगुणं कल्प्यम् । कामतोऽभ्यासे च वसिष्ठः—"श्वमार्जारमण्डूकनकुलसर्पदहरमूषकान् हत्वा द्वादशरात्रं कृच्छ्रमाचरेत्, किञ्चिद्दद्यात्" । दहरोऽल्पमूषकश्छुच्छुन्दरी वा । एतच्च प्रत्येकवधे कल्प्यम् । समुचिकतानेकवधे तु मानवं षाण्मासिकम् । पराशरः—

"हंससारसचक्राहिक्रौञ्चकुक्कुटघातकः ।

मयूरमेषौ हत्वा च एकभुक्तेन शुद्ध्यति" ॥ इति ।

मनुः—"हंसबलाकबकबर्हिवानरश्येनभासान् हत्वा गां दद्यात् । क्रव्यादो मृगान् हत्वा पयस्विनीं गां दद्यात् । अक्रव्यादो वत्सतरीमुष्ट्रं वा हत्वा कृष्णालम्" इति। तथा मद्गुटिट्टिभशुकपारावतान् हत्वा नक्तं भुञ्जीत, चाषकाककपोतसारीतित्तिरप्रभृतीन्हत्वा प्राणायामैः शुद्धः।

दंशनविषये मनुः—

"श्वसृगालखरैर्दष्टो ग्राम्यैः क्रव्याद्भिरेव च ।
नराश्वोष्ट्रवराहैश्च प्राणायामेन शुद्ध्यति" ॥

इदमशक्तविषयम् । शक्तस्य च कल्प्यम् ।

नाभेरध ईषद्दंशने सुमन्तुः—

"श्वशृगालसृगहमहिषाजाविकखरकरभनकुलमार्जारमूषिकाप्लवबककाकपुरुषदष्टानामापोहिष्ठादिभिः स्नात्वा प्राणायामत्रयं च" ।

सम्यग्दष्टविषयेऽङ्गिरसा विशेषोऽभिहितः—

"ब्रह्मचारी शुना दष्टस्त्र्यहं सायं जलाशी, गृही द्व्यहमग्निहोत्री त्वेकाहम्" इति । नाभेरूर्ध्वं चेद्दष्टं तदेदं द्विगुणम् । मस्तके चतुर्गुणमिति । क्षत्रियादिषु पादपादोनं कल्प्यम् ।

नारीविषये विशेषः—"ब्राह्मणी तु जम्बूकश्ववृकदष्टोदितं ग्रहनक्षत्रं दृष्ट्वा शुद्ध्यति । व्रतस्था च शुना दष्टा त्रिरात्रमुपोष्य सघृतं यावकं पीत्वा व्रतं समापयेत्" ।

पुरुषविषयेऽप्येतदेव व्रतस्थे । रजस्वला यदा दष्टा श्वगर्दभजम्बूकैस्तदा पञ्चगव्येन शुद्ध्यति । अरजस्वला चेच्छ्वादिभिः श्वघ्रातावलीढा स्यात्तदोदकप्रक्षालनाग्नितापनादि कर्तव्यम् ।

ब्राह्मणदेहे कृम्युत्पत्तौ मूत्रगोमयाभ्यां त्रिसन्ध्यं स्नात्वा त्रिरात्रं पञ्चगव्याशी शुद्ध्यति, नाभेरूर्द्धं कृम्युत्पत्तौ षड्रात्रम्, शिरोव्रणे प्राजापत्यमिति । एतद्‌क्षत्रियादौ पादपादोनं कल्प्यम् ।

## प्रकीर्णपातकप्रायश्चित्तम् ।

अथ प्रकीर्णकप्रायश्चित्तमभिधीयते । तत्र योगी—

"प्राणायामी जले स्नात्वा खरयानोष्ट्रयानगः ।
नग्नः स्नात्वा च भुक्त्वा च गत्वा चैव दिवा स्त्रियम्" ॥

खरयुक्तं यानं रथादीति कामतः। "उष्ट्रयानं समारुह्य खरयानं तु कामतः"इति मनुस्मरणात्। अथाकामतश्चेत्स्नानमेव। उभयत्राभ्यासे कल्प्यम्। यानव्यतिरेकेण साक्षात्खरारोहणादौ द्वैगुण्यं कल्प्यं व्रते।

तथा गुरुं हुङ्कारत्वङ्काराभ्यां ब्राह्मणं च वादतो निर्जित्य दिनमेकमुपवासः । अभ्यासे त्र्यहमुपोष्य स्नात्वा विप्रं प्रसादयेत् ।

तथा विप्रदण्डोद्यमे कृच्छ्र एकः। निपातनेऽतिकृच्छ्रः। असृक्पाते कृच्छ्रातिकृच्छ्रः । अभ्यन्तरशोणिते कृच्छ्रः । त्वग्भेदे कृच्छ्रः । अस्थिभेदेऽतिकृच्छ्रः । अङ्गकर्त्तने पराकः । पादेन विप्रस्पर्शे दिनमेकमुपोष्य ब्राह्मणप्रसादनम् । इदं कामतः । अकामतश्च प्रसादमात्रमेव । सन्निहिते उदके उदक एव वा ज्ञानतो मूत्रपुरीषोत्सर्गे सचैलं स्नात्वा गोस्पर्शनाच्छुद्धिः । कामतश्चेदेकाहमुपवास इति । अनापदि जलेऽग्नौ वा मेहने तप्तकृच्छ्रमिति ।

मनुः—

"वेदोदितानां नित्यानां कर्म्मणां समतिक्रमे ।

स्नातकव्रतलोपे च प्रायश्चित्तमभोजनम्" ॥ इति ।

यत्र श्रौतस्मार्तकर्म्मसु नित्यहोमादिषु च लोपे सति प्रायश्चित्तविशेषो नाम्नातस्तत्रोपवासः प्रायश्चित्तम् । आम्नातश्चेत्तदाऽभोजनस्य समुच्चयः । ततश्च स्नातकव्रताधिकारे विहितानामाचाराणामेकैकस्य व्यतिक्रमे गायत्र्यष्टसहस्रजपं कृत्वा पूतः । तथा च गुरुः—

"अनिर्वर्त्य महायज्ञान् यो भुङ्क्ते प्रत्यहं गृही ।
अनातुरः सति धने कृच्छ्रार्धेन विशुद्ध्यति" ॥ इति ।

महायज्ञाः पञ्चयज्ञाः । इदं प्रायश्चित्तं विशेषस्यानुपात्ततयाऽकामतः । कामतश्चेद्द्विगुणम् । आपद्यकामतः कृच्छ्रार्द्धमेवेति कल्प्यते । एतत् सकृदनुष्ठाने । अभ्यासे तु कल्प्यम् ।

तथा ऋतुभार्याऽगमनेऽपि कृच्छ्रार्द्धम् ।

"ऋतौ भार्यां न गच्छेद्यः सोऽपि कृच्छ्रार्द्धमाचरेत्" ॥

इति स्मरणात् । तथा यमः—

"स्वभार्यां तु यदा क्रोधादगम्येति नरो वदेत् ।
प्राजापत्यं चरेद्विप्रः क्षत्रियो दिवसान्नव ।
षड्रात्रं तु चरेद्वैश्यस्त्रिरात्रं शूद्र आचरेत्" ॥ इति ।

हारीतः—

"वहन् कमण्डलुं रिक्तमस्नातोऽश्नंश्च भोजने ।
अहोरात्रेण शुद्धः स्याद्दिनजप्येन चैव हि" ॥

तथा "ऐन्द्रं धनुः पालाशाग्निं च यदा परस्मै दर्शयेत्तदाहोरात्रेण शुद्धिः। पङ्क्तिभेदे प्राजापत्यकृच्छ्रः । उदकावतरणमार्गभङ्गकर्त्ता पूजायां वैषम्यकर्त्ता च द्विजश्चान्द्रायणं चरेद् , क्षत्रियादिः पा-

द्पादादिहान्या । म्लेच्छाशुद्धाधार्म्मिकैः संभाषणे पुण्यवतां ध्यानं कृत्वा ब्राह्मणेन सह संभाषयेत् । परभार्याविघ्नकरणे वार्षिकं व्रतम् । शूद्रस्य नमस्कारे ऽयहमुपवासः ।

शङ्खः—

"द्वौ विप्रौ ब्राह्मणाग्नी च दम्पती गोद्विजोत्तमौ ।
अन्तरेण यदा गच्छेत् कृच्छ्रं सान्तपनं चरेत्" ॥

"शय्यारूढे पादुकोपानहारोपितपादोच्छिष्टान्धकारस्थश्राद्ध-कृज्जपदेवपूजानिरताभिवादने त्रिरात्रमुपवासः स्यात् । अन्यत्र निमन्त्रितेनान्यत्र भोजनेऽपि त्रिरात्रम्" इति ।

(१)प्रौढश्रीद्विजराजवंशतिलकालङ्कारहीरप्रभु-
र्भारद्वाजकुलानुगः प्रथमया यः शाखयालङ्कृतः ।
श्रीमद्वल्लभसूनुरात्मनिरतः सत्सम्प्रदायाग्रणीः
सारेऽस्मिन्व्रतचर्यसंज्ञक इह श्रीमान्दलाधीश्वरः ॥
निजामशाहसाम्राज्यधुरन्धरमहीपतिः ।
श्रीनृसिंहप्रसादेऽस्मिन् सम्पूर्णं कुरुते शुभम् ॥

इति श्रीमल्लक्ष्मीनृसिंहचरणयुगलसरोरुहभ्रमरसकलभूमण्डलमण्ड-नसमस्तयवनाधीश्वरश्रीनिजामशाहसमस्तसाम्राज्यधुरन्धरश्रीम-न्महाराजाधिराजश्रीदलपतिराजविरचिते श्रीनृसिंहप्रसादे प्रायश्चित्तसारे प्रकीर्णकानि पातकानि ।

---

(१) प्रकीर्णपातकसमाप्तिसूचकोऽयं ग्रन्थांशोऽभिशापप्रायश्चित्तान्ते ( १६१ पृष्ठे ) पठनीयः ।

# अथाभिशापप्रायश्चित्तम् ।

अथाभिशापप्रायश्चित्तमभिधीयते । तत्र वशिष्ठः—

"पतितं पतितेत्युक्त्वा चौरं चौरेति वा पुनः ।
वचनात्तुल्यदोषः स्यान्मिथ्याद्विदोषतां व्रजेत्" ॥ इति ।

तथा योगी—

"मिथ्याभिशंसिनो दोषो द्विःसमो भूतवादिनः ।
मिथ्याभिशस्तदोषं च समादत्ते मृषा वदन्" ॥ इति ।

तत्र बौधायनः—"पातकाभिशंसने कृच्छ्रस्तदर्धमभिशस्तस्य" इति पातकेनाभिशस्यमानस्य कृच्छ्रम् । अभिशंसनकर्त्तुः कृच्छ्रार्द्धं प्रायश्चित्तमित्यर्थः ।

यथा योगी—

"महापापोपपापाभ्यां योऽभिशंसेन्मृषा परम् ।
अब्भक्षो मासमासीत स जापी नियतेन्द्रियः" ॥ इति ।

ततश्च मिथ्याभिशंसने मासं शुद्धवतीरशुद्धपापोपेताय "एतोऽन्विन्द्रं स्तवामीशानम्" इत्यादिका आवर्तयेत् । इदं मिथ्याभिशापानन्तरं किञ्चित्कालमकृतप्रायश्चित्तस्य ज्ञेयम् ।

यश्चौद्धत्यात्पतितः प्रायश्चित्तं नाचरति तदा निःकाष्यः। तत्प्रकारस्तु पतितपुत्रादयो विद्यागुर्वाचर्यादीन् योनिसम्बन्धान् मातामहमातुलादींश्च मेलयित्वा तेभ्यस्त्यागकारणमावेद्य तैरनुमताः पुत्रादयः सपिण्डाः सर्वाणि पिण्डोदकश्राद्धानि प्रेतकार्याणि जीवन्तमेनमुद्दिश्य कृत्वा अशुचिपात्रमानीय दास्यानीतोदकघटात्तत्पात्रमुदकेन पूरयित्वा तेषु कर्म्मकरः

स्वयं च दक्षिणाभिमुखो देवदत्तमनुदकं करोमीत्यभिधाय पदा विपर्य-स्येत्, तं विपर्यस्य त्याज्यस्य पुत्राः सपिण्डाश्च प्राचीनावीतिनो मु-क्तशिखा अन्वालभेरन् गुर्वादयः स्नात्वा ग्रामं प्रविशेयुः। तत उ-त्पन्नवैराग्यः स प्रायश्चित्तं विहितमार्गेणानुज्ञाय परमायाति ततः प्राय-श्चित्तमहापातकाद्याचरिते नवमनुपहतमुदकपूर्णं घटं शुभे जलाशये प्रक्षिपेयुः। तं च सर्वकार्ये संव्यवहारयेयुः।

तदुक्तं मनुना—

"प्रायश्चित्ते तु चरिते पूर्णं कुम्भमपां नवम्।
तेनैव सार्द्धं प्रास्येयुः स्नात्वा पुण्ये जलाशये"॥

इत्ययमर्थः—यः प्रायश्चित्तेन शुद्ध्यति तस्मिन् शुद्धे सति कुम्भं पुण्यह्रदात् पूरयित्वा स्रवन्तीमेत्य एनमप उपस्पर्शयेत्। अथास्मै तत्पात्रं दद्युः। स तद्गृहीत्वा "शान्ता द्यौः शान्ता पृथिवी" इत्या-दियजुर्भिः पावमानीभिः "तरत्समन्दी धावति" इत्यादिभिः कूष्मा-ण्डीभिश्चाज्यं हुत्वा ब्राह्मणेभ्यो हिरण्यगवादि दद्यात्। तदुत्तर-कालं जातकर्म्मादिसंस्कारान्कुर्यात्। तथा—

"प्रातिलोम्यापवादेषु द्विगुणास्त्रिगुणो दमः।
वर्णानामानुलोम्येन तस्मादर्धार्धहानितः"॥ इति।

तत्र महापातकाभिशंसने मासमब्भक्षणं प्रायश्चित्तम्। अभिश-स्तविषये योगी—

"अभिशस्तो मृषा कृच्छ्रं चरेदाग्नेयमेव वा।
निर्वपेत्तु पुरोडशं वायव्यं पशुमेव च"॥ इति।

प्राजापत्यादीनां मध्येऽन्यतमं शक्त्याद्यपेक्षया योज्यम्। वासिष्ठ

मासमभ्भक्षणं त्वभिशापानन्तरं किञ्चित्कालमकृतप्रायश्चित्तविषयम्। पैठीनसिः—"अनृतेनाभिशस्यमानः कृच्छ्रं चरेन्मासं पातकेषु, महापातकेषु द्विमासं कृच्छ्रम्" इति। यश्च कोपात्स्वभार्यामगम्येति वदेत्स दिनत्रयमुपवासेन शुद्ध्यति। तत्र दिनत्रयं महानद्योपसङ्गमे त्रिषवणं स्नात्वा व्रतान्ते गां दत्त्वा दश ब्राह्मणान् भोजयेत्। यमः—

"विप्रस्य वचनं युक्तं कृत्वा तु शपथं मृषा।
ब्रह्महा यावकान्नेन व्रतं चान्द्रायणं चरेत्॥
क्षत्रियस्य पराकं तु प्राजापत्यं तथा विशः।
वृषलस्य त्रिरात्रं तु व्रतं शूद्रहणं चरेत्"॥

शूद्रग्रहणं त्रिरात्रं चरेदित्यर्थः। योगी—

"वर्णिनां हि वधो यत्र तत्र साक्ष्यनृतं वदेत्।
तत्पावनाय निर्वाप्यश्चरुः सारस्वतो द्विजैः"॥ इति।
"अनापदि चरेद्यस्तु सिद्धां भिक्षां गृहे वसन्।
दशरात्रं चरेद्विज्ञ आपत्काले त्र्यहं द्विजः"॥ इति।
"दिवस्कन्नस्य विप्रस्य त्रिरात्रमुपवासतः।
षष्टिवर्षसहस्राणि नरके पर्युपासते।
विषोद्बन्धेन शस्त्रेणात्मानं योऽभिघातयेत्"॥

ये ब्राह्मणघातिनो गोहतविषबन्धनमृतचौरसर्पादिहतानुगमनवन्तः। तेषामग्निदाने वाहने च रज्जुभेदने तप्तकृच्छ्रेण शुद्धिः। क्रयविक्रयदुष्टभोजनप्रतिग्रहेष्वनादिष्टप्रायश्चित्तेषु चान्द्रायणप्राजापत्याविति। य एव पुरुषाणां परित्यागस्वीकारविधिः स एव स्त्रीणामपि। अयमत्र विशेषो वासस्तृणपर्णमयः स्वगृहसमीपे देयः। गा-

णधारणमात्रमन्नं मलिनं वासः पुरुषान्तरोपभोगरहितस्थानं देयम् । ततः स्त्रीषु च तस्य शिष्यगुरुगा पतिघ्नी प्रातिलोम्यापत्यजनयित्री चेति । तथा शरणागतबालस्त्रीघातकाः कृतप्रायश्चित्ता अपि न संव्यवहार्याः । यद्यपि व्यभिचारिणीस्त्रीवधे स्वल्पमेव व्रतं तथापि वाचनिको व्यवहारप्रतिषेध इत्यलम् ।

इति प्रकाशप्रायश्चित्तम् ।

## अथ रहस्यप्रायश्चित्तमभिधीयते ।

ननु किं पुना रहस्यमुच्यते । कर्तृव्यतिरिक्तैरविज्ञातं पापं रहस्यमित्युच्यते । तस्य प्रायश्चित्तमपि रहस्यमेव न प्रकाशम् । अतः परस्त्रीसंभोगादिद्वयादिभिः कर्तृभिर्विज्ञातमपि दुरितं रहस्यमेव । कर्तृव्यतिरिक्तैरविज्ञातत्वात् । इदं वक्ष्यमाणं प्रायश्चित्तं निपुणास्तर्ह्यन्यस्मायानिवेद्यैव यथोचितं कुर्यात् । यदि स्वयमनिपुणास्तर्हि कश्चित्तदर्थाभिज्ञः स्यात्तं कथञ्चित् पृष्ट्वा तदुक्तं तथा कुर्यात् ।

तच्च द्विविधं प्रायश्चित्तम् । अघमर्षणादिरूपं दानादिरूपं च । तत्र जपादिषु विदुषोऽधिकारो दानादिषु च स्त्रीणां शूद्राणां च । तथा च यमः—"रहस्ये रहस्यं प्रकाशे प्रकाशम् , रहस्यकृते रहस्यमेव प्रकाशकृते प्रकाशम्" इति । यथा हारीतोऽप्याह—"अथ ब्राह्मणस्य श्रुतधर्म्मशास्त्रस्य रहस्यमनुक्रमिष्यामः । रहस्ये रहस्यं प्रकाशे प्रकाशनम्" इति । किञ्च यतो हि रहस्यकृते पापे रहस्यमेव प्रायश्चित्तम् । अतः पर्षदपेक्षापि न । तस्याः प्रकाशविषयत्वात् ।

तथा चाह याज्ञवल्क्यः—

"विख्यातदोषः कुर्वीत पर्षदोऽनुमतं व्रतम् ।
(१)अनभिख्यातदोषस्तु रहस्यं व्रतमाचरेत्" ॥ इति ।

विख्यातदोषो लोकविदितप्रत्यवायः । तदुक्तं मनुना—

"एतैर्द्विजातयः शोध्या व्रतैराविष्कृतैनसः ।
अनाविष्कृतपापांस्तु मन्त्रैर्होमैश्च शोधयेत्" ॥

तथा च यमः—

"ख्यापनेनानुतापेन तपसाध्ययनेन च ।
पापकृन्मुच्यते पापात् तथा दानेन वापदि ॥
यथा यथा नरो धर्म्मं स्वयं कृत्वा न भाषते ।
तथा तथा तु जीवात्मा तेन धर्म्मेण मुच्यते ॥
यथा यथा मनस्तस्य दुष्कृतं कर्म्म विन्दति ।
तथा तथा शरीरं तु तेनाधर्म्मेण मुच्यते ।
नैतत्कार्यं पुनरिति निवृत्त्या पूयते मनः" ॥ इति ।

तत्र रहस्यप्रायश्चित्तं सप्ताङ्गम्—ज्ञानम्, परित्यागः, अपादानमनुकीर्त्तनम्, वेदः, जपः, स्नानं चेत्यङ्गानि । अकार्यमेतदिति ज्ञानम्, परित्यागो नैतत्कुर्यादिति निवृत्तिः, तप्तकृच्छ्रचान्द्रायणादि, वेदाभ्यासो, वैदिकमन्त्रजपः स्नानं प्रसिद्धमघर्षणयुतम् । तत्र व्रतसामग्र्याहारविशेषानुक्तौ हविष्यादयः, कालविशेषानुक्तौ संवत्सरादयः, देशविशेषानुक्तौ पर्वतादयः ।

---

(१) "अनभिख्यात" इति निर्णयसागरपुस्तके पाठः ।

तत्रात्रिः—

"ध्यानेन सदृशं नास्ति शोधनं पापकर्म्मणाम् ।
श्वपाकेष्वपि भुञ्जानो ध्यानी नैव तु लिप्यते" ॥ इति ।

पैठीनसिः—

सर्वपापप्रसक्तोऽपि ध्यायन्निमिषमच्युतम् ।
पुनस्तपस्वी भवति पङ्क्तिपावनपावनः" ॥

इति ध्यानं कार्यम् । तदभावे तत्र साधारणव्रतं तावदन्वहं षोडश द्वादश वा सव्याहृतयः सप्रणवाः प्राणायामाः, संवत्सरपर्यन्तं महापातकेषु कृतक्रियमाणपापापनोदाय "ब्रह्मप्रतिष्ठा" इत्येतावद्यजुः समर्थम् । प्रत्यहं सहस्रगायत्रीजपः, तथा द्विगुणं विराजं च । तथा वामदेव्यस्य सूक्तस्य त्रिरात्रजपस्तदहरेव शुद्धिकरः, एकगुणवेदजपो रुद्रैकादशिनीजपो वा ।

तत्र विष्णुः—"अथातः सर्ववेदपवित्राणि भवन्ति येषां जपैश्च होमैश्च द्विजातयः पापेभ्यः पूयन्ते । अघमर्षणम् , देवहुतम् , शुद्धवत्यः, तरत्समन्दीयम् , कूष्माण्ड्यः, पावमान्यः, दुर्गा सावित्री अभीषङ्गाः पदस्तोभाः सामानि, व्याहृतयो भारुण्डानि, चन्द्रसामपुरुषव्रते सामनी, अब्लिङ्गम् , बार्हस्पत्यं वा सूक्तम् , गोसूक्तम् , वाक्सूक्तम् , अश्वसूक्तम् , मध्वर्चम् , सामनी चेन्द्रशुद्धे, शतरुद्रीयम् अथर्वशिराः, त्रिसुपर्णम् , महाव्रतम् , नारायणीयम् , पुरुषसूक्तं च ।

श्रीण्याज्यदोहानि रथन्तरं च
अग्नेर्व्रतं वामदेव्यं बृहच्च ॥

एतानि जप्तानि पुनन्ति जन्तून्
जातिस्मरत्वं लभते यदीच्छेत्'' ॥ ( ५६।१-२७ )

तथा—अष्टम्येकादशीद्वादशीत्रयोदशीचतुर्दश्यमावास्यासु श्रीविष्णुत्रिलोचनेशधर्म्मराजभवानभ्यर्च्य पूतः स्यात् । तथा मृगारेष्टिपवित्रेष्टिवैश्यानरेष्टिप्रमुख्या इष्टीश्च कृत्वा पूतो भवति ।

## अथ प्रतिपदोक्तप्रायश्चित्तम् ।

अथ रहस्यकृतब्रह्महत्याप्रायश्चित्तमाह बौधायनः—ग्रामात्प्राचीमुदीचीं वा दिशमुपनिःक्रम्य स्नातः शुचिरुदकान्ते स्थण्डिलमुपलिप्य सकृत् क्लिन्नवासाः सकृत्पूतेन पाणिना सूर्याभिमुखोऽघमर्षणं स्वाध्यायमधीयीत। प्रातः शतं मध्याह्ने शतं सायं शतमपरिमितं वा । उदितेषु नक्षत्रेषु प्रसृतियावकमश्नीयात्, ज्ञानकृतेभ्योऽज्ञानकृतेभ्यश्चोपपातकेभ्यः सप्तरात्रात्प्रमुच्यते । द्वादशरात्रान्महापातकेभ्य एवं ब्रह्महत्यां सुरापानं सुवर्णस्तेयं च वर्जयित्वा। एकविंशतिरात्रेण तान्यप्यतितरति'' इति ।

तथा बृहद्विष्णुरपि—''ब्रह्महत्यां कृत्वा उदीचीं प्राचीं वा दिशमुपनिःक्रम्य प्रभूतेन्धनैरग्निं प्रज्वाल्याघमर्षणाष्टसहस्राहुतीर्जुहुयात् । तदेतस्मात्पूतो भवति'' इति। इदं कामाकामभेदेन व्यवस्थापनीयम्। तथा मनुः—

''अरण्ये वा त्रिरभ्यस्य प्रयतो वेदसंहिताम् ।
मुच्यते पातकैः सर्वैः पराकैः शोधितस्त्रिभिः'' ॥ इति ।
( ११।२५८ )

तथा च याज्ञवल्क्यः—

"त्रिरात्रोपोषितो जप्त्वा ब्रह्महा त्वघमर्षणम् ।
अन्तर्जले विशुद्ध्येत गां दत्त्वा तु पयस्विनीम्" ॥ इति ।
( ३।३०१ )

शङ्खलिखितावपि—

"ब्रह्महा त्रिरात्रोपोषितोऽन्तर्जलेऽघमर्षणं त्रिरावर्तयेत्" इति ।

तथा—

"लोमभ्यः स्वाहेत्यथवा दिवसं मारुताशनः ।
जले स्थित्वाभिजुहुयात् चत्वारिंशद्घृताहुतीः" ॥

अहोरात्रोषितो रात्रावुदकवासं कृत्वा प्रातरुदकादुत्तीर्य "लोमभ्यः स्वाहा" इत्यादिभिरष्टभिर्मन्त्रैरेकैकेन पञ्चाहुतीर्जुहुयात् । इदञ्च प्राणान्तिकप्रायश्चित्तं ब्रह्मवधे इत्यपरार्कमतम् ।

तथा च सुमन्तुः—

"देवद्विजगुरून्हत्वा सुनिमग्नोऽघमर्षणम् ।
सूक्तं त्रिरावर्त्तयेत् सर्वस्मान्महापातकात्पूतो भवति" ॥

## अथ सुरापाने प्रायश्चित्तम् ।

आकामतः पैष्ट्याः सकृत्पाने गौडीमाध्व्योः पानावृत्तौ "यद्देवादेवहेडनम्" इत्यादिकूष्माण्डीभिर्जुहुयात् । "त्रिरात्रोपोषितो हुत्वा कूष्माण्डीभिर्घृतं शुचिः" इति योगिस्मरणात् । कामतश्चेत् शाकलकमन्त्रैर्होमं घृतेन वा "नमः" इत्यृग्जपं च कुर्यात् ।

"मन्त्रैः शाकलहोमीयैरब्दं हुत्वा घृतं द्विजः ।
सुरापीत्यपहन्त्येनो जप्त्वा वा "नमः" इत्यृचम्" ।

इति मनुस्मरणात् ।

वशिष्ठः—

"सुरां पीत्वाप्सु निमज्ज्य त्रिः पठेदघमर्षणम् ।
यथाश्वमेधावभृथस्तादृशं मनुरब्रवीत्" ॥ इति ।

( व. स्मृ. २६।८ )

अत्र ज्ञानाज्ञानाभ्यासैर्व्यवस्था कल्पनीया ।

## अथ सुवर्णस्तेयव्रतम् ।

तत्र शातातपः—

"मद्यं पीत्वा गुरुदारांश्च गत्वा
स्तेयं कृत्वा ब्रह्महत्यां च कृत्वा ॥
भस्मच्छन्नो भस्मशय्यां शयानो
रुद्राध्यायी मुच्यते सर्वपापैः" ॥ इति । (शा.स्मृ.१।७१) ।

बृहस्पतिः—

"सकृज्जप्त्वास्यवामीयं शिवसंकल्पमेव वा ।
अपहृत्य सुवर्णं वा क्षणाद्भवति निर्मलः" ॥ इति ।

यमः—"ब्राह्मणः सुवर्णस्तेयं कृत्वा हिरण्यं शालायां प्रक्षिप्याप्सु निष्णातो ग्रीवामात्रमुदकं हिरण्यवर्णाभिश्चतसृभिरात्मानमभ्युक्ष्य त्रीन्प्राणायामान् कृत्वा तदेतस्मात्पापात्पूतो भवति" इति ।

तथा योगी—

"ब्राह्मणः स्वर्णहारी तु रुद्रजापी जले स्थितः" इति।

जप एकादशकृत्वः कार्य इत्याहात्रिः—

"एकादश गुणान्वापि रुद्रमावर्त्त्य धर्म्मवित्।
महापापैरपि स्पृष्टो मुच्यते नात्र संशयः"॥ इति।

तत्र याज्ञवल्क्यः—

"सहस्रशीर्षजापी तु मुच्यते गुरुतल्पगः।
गौर्देया कर्म्मणोऽस्यान्ते पृथगेव पयस्विनी"॥ इति।

यमः—

"पौरुषं सूक्तमावर्त्त्य मुच्यते सर्वकिल्विषात्"॥ इति।

तथा "गुरुतल्पगमनं कृत्वाऽघमर्षणमन्तर्जले स्थित्वा त्रिरावर्त्य तदेतस्मात्पापात्पूतो भवति" इति। तथा मनुरपि—

"हविष्यन्तीयमभ्यस्य न तमं वा इतीति च।
जप्त्वा च पौरुषं सूक्तं मुच्यते गुरुतल्पगः"॥ इति।

यत्तु षट्त्रिंशन्मते—

"महाव्याहृतिभिर्होमस्तिलैः कार्यो द्विजन्मना।
उपपातकशुद्ध्यर्थं सहस्रपरिसंख्यया॥
महापातकसंयुक्तो लक्षहोमेन शुद्ध्यति"। इति।

तदावृत्तिपरम्। संसर्गी येन सह संसर्गं करोति स तस्यैव व्रतं कुर्यात्।

# अथोपपातकरहस्यप्रायश्चित्तम् ।

पातकातिपातकोपपातकमहापातकानामेकतमे संनिपाते वा हारीतोक्तमघर्षणा एव त्रिर्जपेत् इति मन्तव्यम् ।

तथाह योगी—

"प्राणायामशतं कार्यं सर्वपापापनुत्तये ।
उपपातकजातानामनादिष्टस्य चैव हि" ॥

तत्र महापातकेषु चतुःशतम्, अतिपातकेषु द्विशतम्, प्रकीर्णकादिषु शतमित्यादितारतम्येन कल्पनीयम् । प्रकाशप्रायश्चित्तेषु महापातकतुरीयांशस्योपातकेषु विधानदर्शनात् । तथा च यमः—

"दशप्रणवसंयुक्तैः प्राणायामैश्चतुःशतैः ।
मुच्यते ब्रह्महत्यायाः किं पुनः शेषपातकैः" ॥ इति ।

ततश्चोपपातकेष्वकामतः सकृत्कृते तु शतं प्राणायामाः । अभ्यासे कामतश्च द्विगुणं कल्प्यम् । जातिभ्रंशकरादिषु किञ्चिन्न्यूनं कल्पनीयम् । शूद्रस्त्रीगमनान्नभोजनेषु पृथक्पृथक्सप्ताहं सप्त सप्त प्राणायामान् वाचरेत् । इदमुपपातकविशेषाभिप्रायम् । तथाऽभक्ष्याभोज्यामेध्यप्राशनेष्वयोग्यविक्रयेषु मधुमांसतैलघृतलाक्षालवणरसान्नवर्जितेषु यच्चान्यदप्येवं युक्तं स्याद् द्वादशाहं द्वादश द्वादश प्राणायामान्धारयेत् ।

तथा "लशुनपलाण्डुप्रभृतीनां भक्षणं कृत्वा ततः कण्ठमात्रमुदकमवतीर्य शुद्धवतीभिः प्राणायामं कृत्वा ब्रह्मव्याहृतिभिरुरोगमुदकं पीत्वा तदेतस्मात्पूतो भवति" इति विष्णुः ।

महापातकेषु संवत्सरं द्वादश द्वादश प्राणायामान् धारयेदेत-
दतितिष्ठेदिति तत्समविषयगायत्रीविषये संख्यामाह शङ्खः—

"शतं जप्ता तु सा देवी सर्वपापप्रणाशिनी ।
सहस्रं जप्ता तु तथा पातकेभ्यः प्रमोचिनी ॥
दशसाहस्रजाप्येन सर्वकिल्बिषनाशिनी ।
लक्षं जप्ता तु सा देवी महापातकनाशिनी" ॥ इति ।

प्रकाशप्रायश्चित्तविषये—

"गायत्र्यास्तु जपन्कोटिं ब्रह्महत्यां व्यपोहति ।
लक्षाशीतिं जपेद्यस्तु सुरापानाद्विमुच्यते ॥
पुनाति हेमहन्तारं गायत्र्या लक्षसप्ततिः ।
गायत्र्या लक्षषष्ट्या तु मुच्यते गुरुतल्पगः" ॥ इति ।

रहस्यप्रायश्चित्ते गायत्र्या लक्षहोमः कर्तव्यः । होमद्रव्यं ति-
लादि । मनुः—

"प्रतिगृह्याप्रतिग्राह्यं भुक्त्वान्नं वा विगर्हितम् ।
तरत्समन्दीयसूक्तं जपेत् त्रिरघमर्षणम्"(१) ॥
निशायां वा दिवा वापि यदज्ञानकृतं भवेत् ।
त्रैकाल्यसन्ध्याकरणात् तत्सर्वं विप्रणश्यति" ॥

स्त्रीशूद्रैस्तिलदानं तिलहोमस्तिलभोजनमिति च ।

प्रौढश्रीद्विजराजवंशतिलकालङ्कारहीरः प्रभु-
र्भारद्वाजकुलानुगः प्रथमया यः शाखयालङ्कृतः ।

---

(१) "जपंस्तरत्समन्दीयं पूयते मानवस्त्र्यहात्" प्रचलितमनु-
स्मृतौ पाठः ।

श्रीमद्वल्लभसूनुरात्मनिरतः सत्सम्प्रदायाग्रणीः
सारेऽस्मिन्व्रतचर्यसंज्ञक इह श्रीमान्दलाधीश्वरः ॥
निजामशाहसाम्राज्यधुरन्धरमहीपतिः ।
श्रीनृसिंहप्रसादेऽस्मिन् सपूर्णां कुरुते शुभम् ॥

इति श्रीमल्लक्ष्मीनृसिंहचरणयुगलसरोरुहभ्रमरसकलभूमण्डलमण्ड-
नसमस्तयवनाधीश्वरश्रीनिजामशाहसमस्तसाम्राज्यधुरन्धरश्रीम-
न्महाराजाधिराजश्रीदलपतिराजविरचिते श्रीनृसिंहप्रसादे
प्रायश्चित्तसारे रहस्यप्रायश्चित्तम् ।

---

## अथ कृच्छ्रचान्द्रायणादिव्रतलक्षणानि ।

तत्राप्यादौ पादकृच्छ्रोऽभिधीयते । एकभक्तनक्तायाचितोपवासैः पादकृच्छ्रः स्यात् । तदुक्तं योगिना—

"एकभक्तेन नक्तेन तथैवायाचितेन च ।
उपवासेन चैवायं पादकृच्छ्रः प्रकीर्त्तितः" ॥ इति ।

( ३।३१८ )

दिवैवोक्तकाले एककालकृतं भोजनमेकभक्तम् । "दिनार्धसमयेऽतीते" इत्युक्तेः । रात्रावुक्तकाले सकृद्भोजनं नक्तम् । "नक्षत्रदर्शनान्नक्तम्" इत्युक्तेः। दिवा रात्रौवाऽप्रार्थितं भोजनमयाचितम् । न विद्यते याचितं यत्र भोजने तदयाचितं स्वस्त्रीभ्योऽपि । निरन्नत

उपवासः । एवं दिनचतुष्टयसाध्यः पादकृच्छ्रः । नक्तादौ ग्रास-संख्या पराशरेणोक्ता—

"सायं तु द्वादश प्रोक्ताः प्रातः पञ्चदश स्मृताः ।
चतुर्विंशतिरायाच्याः परं निरशनं स्मृतम्" ॥ इति ।

आपस्तम्बस्तु विशेषमाह—

सायं द्वाविंशतिर्ग्रासाः प्रातः षड्विंशतिः स्मृताः ।
चतुर्विंशतिरायाच्याः परं निरशनात्त्रयः" ॥ इति ।

सायं नक्तं प्रातरेकभक्तपदं तदशक्तविषयम् । ग्रासप्रमाणं तेनै-वावादि "कुक्कुटाण्डप्रमाणाः स्युर्यथावास्यं विशेत्सुखम्" इति । अयं हि शक्त्यपेक्षो विकल्पः । उत्तरत्रापि शक्त्यैव विकल्पः । चतु-र्विंशतिमते प्रकारान्तरं श्रूयते—

"प्रातस्तु द्वादश ग्रासाः सायं पञ्चदशैव तु ।
अयाचिते च द्वावष्टौ परं वै मारुताशनः" ॥ इति ।

आपस्तम्बेन प्राजापत्यकृच्छ्रस्य चतुर्धा विभागं कृत्वा ब्रह्मक्ष-त्रियविट्शूद्राणां पादकृच्छ्रव्यवस्थाभिहिता ।

"त्र्यहं निरशनं पादः पादश्चायाचितं त्र्यहम् ।
सायं त्र्यहं तथा पादः पादः प्रातस्तथा त्र्यहम् ॥
प्रातः पादं चरेच्छूद्रः सायं वैश्यस्य दापयेत् ।
अयाचितं तु राजन्ये त्रिरात्रं ब्राह्मणे स्मृतम्" ॥ इति ।

एकभक्तत्रयं प्रातः पादस्ततश्चायमर्थः सम्पन्न--एकभक्तत्रयमेको भागः, नक्तत्रयं द्वितीयः, अयाचितत्रयं तृतीयः, उपवासत्रयं च-तुर्थ इति । तत्रायाचितोपवासभागौ मिलितावर्धकृच्छ्र इत्युच्यते ।

एकभक्तायाचितोपवासभागा मिलिताः पादोनकृच्छ्र इत्युच्यत इति। "सायं प्रातर्दिनार्धे स्यात् पादोनं नक्तवर्जितम्" इति कथनात्। केचिदर्धकृच्छ्रं प्रकारान्तरेणाहुः—

"सायं प्रातस्तथैवोक्तं दिनद्वयमयाचितम्।
दिनद्वयं च नाश्नीयात् कृच्छ्रार्धं तद्विधीयते"॥ इति।

## अथ प्राजापत्यकृच्छ्रम्।

अयमेव पादकृच्छ्रो यथाकथंचित्त्रिगुणः प्राजापत्यकृच्छ्रः। स चतुर्धा। एकभक्तनक्तायाचितोपवासानां क्रमेणानुलोम्येन प्रातिलोम्येन स्वस्थानविवृद्ध्या दण्डकलितवदावृत्त्या वा। सर्वत्र जपादितद्राहित्येन वेति। तदाह मनुः प्रथमपक्षम्(१)—

"त्र्यहं प्रातस्त्र्यहं सायं त्र्यहमद्यादयाचितम्।
त्र्यहं परं च नाश्नीयात् प्राजापत्योऽयमुच्यते"॥ इति।

(२)द्वितीयं वशिष्ठः—"प्रातिलोम्यं चरेद्विप्रः कृच्छ्रं चान्द्रायणोत्तरम्" इति। अत्रैकभक्तादीनां स्वस्थान एवाभिवृद्धत्वात्स्वस्थानविवृद्धिरभिमता। उपवासत्रयमयाचितत्रयनक्तत्रयमेकभक्तत्रयमिति प्रातिलोम्यम्।

स एव तृतीयमपि(३)—

"अहः प्रातरहर्नक्तमहरेकमयाचितम्।

(१) आनुलोम्येन स्वस्थानविवृद्धिपक्षमित्यर्थः।

(२) प्रातिलोम्येन दण्डकलितवदावृत्तिपक्षमित्यर्थः।

(३) आनुलोम्येन दण्डकलितवदावृत्तिपक्षमित्यर्थः।

अहः पराकं तत्रैकमेवं चतुरहौ परौ ॥

पराक उपवासः ।

अनुग्रहार्थं विप्राणां मनुर्धर्म्मभृतां वरः ।

बालवृद्धातुरेष्वेवं शिशुकृच्छ्रमुवाच ह" ॥ इति ।

स्त्रीशूद्रादिविषयचतुर्थमङ्गिराः—

"तस्माच्छूद्रं समासाद्य सदा धर्म्मपथे स्थितम् ।

प्रायश्चित्तं प्रदातव्यं जपहोमविवर्जितम्" ॥ इति ।

योगीश्वरेण प्राजापत्यकृच्छ्र एवमभिहितः । "यथाकथञ्चित्त्रिगुणः प्राजापत्योऽयमुच्यते" इति । अयमर्थः—अयमेव पादकृच्छ्रो दिनचतुष्टयात्मकः सर्वनाम्नायमित्यनेन परामृष्टः । सर्वनाम्नः प्रकृतप्रसिद्धान्यतमपरामर्शित्वात् । अयमेव यथाकथञ्चित्त्रिगुण इत्यन्वयः । यथाकथञ्चिदित्यनेन दण्डकलितवदावृत्तिः, आनुलोम्यप्रातिलोम्याभ्यां स्वस्थानविवृद्धिः, जपान्न्यूनता तद्रहितताभिप्रेता । ततश्चाद्यपक्षचतुष्टये द्विजानामधिकारः । जपरहितपक्षे स्त्रीशूद्रयोरिति व्यवस्था ।

त्रैवर्णिकविषयजपादियुक्तपक्षमुपक्षिपति गौतमः—"अथातः कृच्छ्रान् व्याख्यास्यामो हविष्यान् प्रातराशान् भुक्त्वा तिस्रो रात्रीर्नाश्नीयात्, अथापरं त्र्यहं नक्तं भुञ्जीत, अथापरं त्र्यहं न कञ्चन याचेत, अथापरं त्र्यहमुपवसेत्, तिष्ठेदहनि, रात्रावासीत क्षिप्रकामः । सत्यं वदेत्, अनार्यैर्न संभाषेत रौरवयौधाजपौ नित्यं प्रयुञ्जीत, अनुसवनमुदकोपस्पर्शनमापोहिष्ठेति तिसृभिः पवित्रवतीभिर्मार्जयीत हिर-

हमाय मोहमाय संमोहमाय धुन्वने तापसाय पुनर्वसवे नमः। नमो मौञ्ज्यायोर्म्याय वसुविन्दाय सर्वविन्दाय नमः। नमः पाराय सुपाराय महापराय पारदाय पारयिष्णवे नमः। नमो रुद्राय पशुपतये महते देवाय त्रियम्बकायैकचरायाधिपतये हराय शर्वायेशानायोग्राय वज्रिणे घृणिने कपर्दिने नमः। नमो नमः सूर्यायादित्याय। नमो नमो नीलग्रीवाय शितिकण्ठाय। नमो नमः कृष्णाय पिङ्गलाय। नमो नमो ज्येष्ठाय श्रेष्ठाय वृद्धायेन्द्राय हरिकेशायोऽर्ध्वरेतसे। नमो नमः सत्याय पावकाय पावकवर्णाय कामाय कामरूपाय नमो दीप्ताय दीप्तरूपिणे। नमो नमस्तीक्ष्णाय तीक्ष्णरूपिणे। नमो नमः सौम्याय सुपुरुषाय महापुरुषाय मध्यमपुरुषायोत्तमपुरुषाय ब्रह्मचारिणे। नमो नमश्चन्द्रललाटाय कृत्तिवाससे पिनाकहस्ताय नमो नम इति। एतदेवादित्योपस्थानम्। एता एवाज्याहुतयो द्वादश तस्यान्ते चरुं श्रपयित्वैताभ्यो देवताभ्यो जुहुयात्। अग्नये स्वाहा, सोमाय स्वाहा, अग्नीषोमाभ्यामिन्द्राग्निभ्यामिन्द्राय विश्वेभ्यो देवेभ्यो ब्रह्मणे प्राजापतये अग्नये स्विष्टकृत इति, अन्ते ब्राह्मणभोजनम्'' इति।

अयमर्थः स्वरसः—हविष्यानित्याद्युपवसेदित्यन्तेन प्राजापत्यस्वरूपकथनम्। तिष्ठेदित्यादिना तस्यैवेतिकर्त्तव्यतोक्ता। प्रातराशा एकभक्तानि। तेष्वेकभक्तदिनेषु तिसृष्वपि तिस्रो रात्रीर्नाश्नीयाद्रात्रिभोजनं न कुर्यात्। अहनि तिष्ठेदित्यनेनाहन्यावश्यककर्म्माविरुद्धे काले। ततश्चाहनि भोजनाद्यविरुद्धे काले तिष्ठेत्। उत्थित एव स्यादित्यर्थः। क्षिप्रकामोऽपि भवेत्। शीघ्रं शुद्धः स्यामिति संजातकामोऽपि भवेदिति। यद्वा शीघ्रशुद्धिकामोऽहनि तिष्ठेद्रात्रावासीतेत्यर्थः। कामो-

त्तमाधिकारिविशेषणमिदम् । अनेन यः शनैः शुद्धो भविष्यामीति मन्यते तस्य नायं नियमः । यश्च प्राजापत्यकृच्छ्रद्वयापनोद्यात्पापात्त्तिप्रमेकेनैव कृच्छ्रेण निर्मुक्तो भविष्यामीत्यभिलषति स एवं नियमं कुर्यात् । अहनि तिष्ठेद्रात्रावासीतेत्यवगम्यते। तथा रौरवयौधाजपं कुर्यात्। अनुसवनं सन्ध्यात्रयमुपस्पर्शनं स्नानम् । त्रिषवणस्नानमिति यावत् । नमो हमायेत्यादयस्त्रयोदश मन्त्रास्तर्पणसूर्योपस्थानाज्यहोमेषु द्रष्टव्याः । अथवा सम्प्रदानविभक्त्यन्ताः षट्पञ्चाशन्मन्त्राः । तर्पणमनुसवनं कार्यम् । तत्र तर्पणस्य स्नानाङ्गत्वात् । आमन्त्रयोग आदावन्ते च नमःशब्दप्रयोगः । "नमो हमाय" इत्यादि "पुनर्वसवे नमः" इत्यन्त एको मन्त्रः । एवं "नमो मौञ्ज्यायेत्यारभ्य सर्वविदाय नमः इत्यन्तमेको मन्त्रः । एवमग्रेऽपि । एवं त्रयोदशभिर्मन्त्रैस्तर्पणमाद्ये पक्षे । हिरण्यवर्णा इत्यष्टाभिरपि मार्जनमेव । एता आज्याहुतयोऽत्राभेदोपचारः । एतैरेव मन्त्रैर्लौकिकाग्निप्रतिष्ठां कृत्वाऽऽज्यहोमः कर्तव्य इत्यर्थः । एवं प्रतिदिनं कृत्वा द्वादशरात्रान्ते चरुं श्रपयित्वा एताभ्यो वक्ष्यमाणाग्न्यादिदेवताभ्यो होमं कुर्यात् । तत्र मन्त्रा नव स्वाहान्ता भवन्ति । ततश्च ब्राह्मणभोजनमिति ।

इदं च गौतमीयप्राजापत्यं व्रतं याज्ञवल्क्याद्युक्तप्राजापत्यद्वयस्थानं द्रष्टव्यमिति । कर्तव्यताबाहुल्यात् त्तिप्रकाम इति विशेषणादि ।

अत्रात्रिः—

"अथ चेत्त्वरितं कर्तुं दिवसं मारुताशनः ।
रात्रौ जले स्थितोऽव्युष्टः प्राजापत्येन तत्समम् ॥
गायत्र्यष्टसहस्रं तु जपन् कृत्वोत्थितो रवौ ।

मुच्यते पातकैः सर्वैर्यदि नो भ्रूणहा भवेत्" ॥ इति ।

## अथातिकृच्छ्रोऽभिधीयते ।

एकभक्तनक्तायाचितदिनेषु नवस्वेकैको ग्रासः, त्र्यहमुपवास इति द्वादशदिनसाध्योऽतिकृच्छ्रो जायते ।

"एकैकं ग्रासमश्नीयात् त्र्यहाणि त्रीणि पूर्ववत् ।
त्र्यहं चोपवसेदन्त्यमतिकृच्छ्रं चरन् द्विजः" ॥

इति मनुस्मरणात् ।

त्रीणि त्र्यहाणि नवदिनानीत्यर्थः । पूर्ववदेकभक्तनक्तादिकालेन नियमयुक्तः स्यात् ।अत्र योगिना विशेष उक्तः—

"अयमेवातिकृच्छ्रः स्यात्पाणिपूरान्नभोजनः" ॥ इति ।

पूर्वोक्तप्राजापत्यधर्म्मकोऽयम् । अयमर्थः—अत्र च पाणिपूरान्नभोजनमात्रं विधेयं न पुनर्भोजनमपि । तस्य प्राप्ते नापि विशिष्टविधिः । विशेषणविधिपूर्वकत्वात्तस्य प्रकारान्तरेणावगतेश्च । ततश्च येषु दिनेषु भुक्तिप्रसक्तिस्तत्र तदनुवादेन पाणिपूरणान्नताया विधानात् । नोपवासदिनेषु पाणिपूरणान्नताया विधेयता । भुक्त्यप्रसक्तेः। ततश्चैकभक्तनक्तायाचितादिषु पाणिपूरणमात्रमन्नं भुञ्जीत । ननु पूर्वोक्तरीत्या हि ग्रासाणामित्यतो नित्यादिफलकतयाऽपूर्वता मनुयोग्यभिहिता । एतयोः पक्षयोः शक्ताशक्तविषयतया व्यवस्था । शक्तौ मनुपक्षः। अशक्तौ योगिपक्षः । पाणिपूरान्नस्य ग्रासपरिमितादन्नाधिकपरिमाणत्वात् । पापापेक्षया व्यवस्था ।

# अथ वृद्धिकृच्छ्रः ।

यमः—

"द्व्यहं कल्ये द्व्यहं सायं द्व्यहमद्यादयाचितम् ।
वायुभक्षो द्व्यहं भूत्वा वृद्धिकृच्छ्रं विधीयते" ॥ इति ।

# अथ कृच्छ्रातिकृच्छ्रः ।

एकभक्तनक्तायाचितदिवसेषु यो भोजनकालस्तस्मिन्नेव काले केवलमुदकेनैव वर्त्तनमित्यब्भक्षस्तृतीयः कृच्छ्रातिकृच्छ्रः" इति गौतमः ।गौतमयोगीश्वरपक्षयोः शक्ताशक्तविषयतया व्यवस्था ।

यमस्तु विशेषमाह—

"एकैकं पिण्डमश्नीयात् त्र्यहं कल्ये त्र्यहं निशि ।
अयाचितं त्र्यहं पिण्डं वायुभक्षस्त्र्यहं परम् ॥
अतिकृच्छ्रं चरेदेतत्पवित्रं पापनाशनम् ।
चतुर्विंशतिरात्रं तु नियतात्मा जितेन्द्रियः ॥
कृच्छ्रातिकृच्छ्रं कुर्वीत एकस्थाने द्विजोत्तमः" ॥ इति ।

कल्ये प्रातः । एकभक्तकाल इत्यर्थः । एकस्थान इत्युक्तेश्चतुर्विंशतिरात्रसाध्यमतिकृच्छ्रद्वयम् । कृच्छ्रातिकृच्छ्रात्मक एककृच्छ्र इति यावत् ।

# अथ सौम्यकृच्छ्रः ।

आचामपिण्याकाम्बुतक्रसक्तुरूपपञ्चानामेकैकं प्रतिदिनमुपभुज्य

षष्ठदिन उपवास इति । तदुक्तं योगिना—

"पिण्याकाचामतक्राम्बुसक्तूनां प्रतिवासरम् ।

एकरात्रोपवासश्च कृच्छ्रः सौम्योऽयमुच्यते" ॥ इति ।

पिण्याकं पिण्डी । आचाम ओदननिस्रावः । प्रसिद्धमन्यत् । पिण्याकादिकं प्राणधारणमात्रेणोपयोगि, नाधिकम् । अयं च शक्त्यपेक्षः सौम्यकृच्छ्रः । अशक्तौ तु जाबालिनाऽभिहितश्चतुरहव्यापी—

"पिण्याकं सक्तवस्तक्रं चतुर्थेऽहन्यभोजनम् ।

वासो वै दक्षिणां दद्यात् सौम्योऽयं कृच्छ्र उच्यते" ॥ इति ।

## अथ पराककृच्छ्रः ।

द्वादशाहोपवासेन पराककृच्छ्रः स्यात् ।

"द्वादशाहोपवासेन पराकः परिकीर्त्तितः,, इति योगिस्मरणात् ।

## अथ तुलापुरुषकृच्छ्रः ।

स चैकोऽष्टदिनसाध्यः, एकः पञ्चदशदिनसाध्यः ।

तत्र जाबालिः—

"पिण्याकं च तथाचामं तक्रं चोदकसक्तवः ।

त्रिरात्रमुपवासश्च तुलापुरुष उच्यते" ॥ इति ।

द्वितीयमाह योगी —

"एषां त्रिरात्रमभ्यासादेकैकस्य यथाक्रमम् ।

तुलापुरुष इत्येष ज्ञेयः पञ्चदशाहिकः" ॥

यमस्तु तृतीयमाह—

"आचाममथ पिण्याकं तक्रं चोदकसक्तुकान् ।
त्र्यहं त्र्यहं प्रयुञ्जानो वायुभक्षस्त्र्यहद्वयम् ॥
एकविंशतिरात्रस्तु तुलापुरुष उच्यते" ॥ इति ॥

अत्र हि पापतारतम्येन व्यवस्था । हारीतस्तु सेतिकर्त्तव्यताकं तुलापुरुषकृच्छ्रमाह—

"अथातस्त्रिनयनोक्ततुलापुरुषकल्पं व्याख्यास्यामः ।
अयाज्ययाजननं कृत्वा प्राश्य मूत्रपुरीषके ॥
दुष्प्रतिग्रहमादाय याजयित्वा तु निन्दितान् ।
विनायकोपसृष्टस्य महाव्याधिहतस्य च ॥
एतत्कृच्छ्रं तुलापूर्षं महापातकनाशनम् ।
स्वर्गद्वारमिदं पुण्यं महादेवेन निर्मितम् ॥
आचाममथ पिण्याकं तक्रं चोदकसक्तुकान् ।
त्र्यहं त्र्यहं प्रयुञ्जनो वायुभक्षस्त्र्यहं परम् ॥
(१)वाक्पादचैलरक्षोभिर्हतानि विहृतानि च ।
आचामस्तानि निर्हन्ति नवश्राद्धं च सूतकम् ॥
तैक्ष्ण्यं च दारुणं चैतत्केशकीटहतं च यत् ।
आखोर्मूत्रपुरीषं च ब्रह्महस्पृष्टमेव च ॥
पिण्याकस्तानि निर्हन्ति अस्थि भित्त्वा तु यत्स्थितम् ।
आहारेषु ये दोषा स्नेहदोषाश्च ये क्वचित् ॥

---

( १ ) "वाचा कायेन मनसा कृतानि विविधानि च" इति हारीतस्मृतौ पाठः ।

खरोष्ट्रमुखसंस्पृष्टमध्यसंस्पृष्टमेव च ।
तक्रेण तानि निर्हन्ति यच्चान्यत् श्वावलोकितम् ॥
कनकाश्वतिला गावो भूमिराच्छादनं स्त्रियः ।
सर्वं पुनाति धर्म्मात्मा गूढं चोदकसक्तुभिः ॥

ब्रह्महत्यां भ्रूणहत्यां सुवर्णस्तेयं सुरापानं गुरुदाराभिगमनं कन्यादूषणं क्लीबाभिगमनमुदक्याभिगमनं वायुभक्षः पुनाति ।

गन्धोशीरमयौ कार्यौ पुरुषौ पलसंमितौ ।
नदीमृत्तिकया वापि पुरुषौ द्वौ च कारयेत् ॥
महापशुर्येन शरेण विद्धो
यद्वा शस्त्रमुभयतो यच्च लब्धम् ।
तेनायसीं सुतुलां कारयित्वा
प्रादेशमात्रामुभयतो जातशिक्याम् ॥
सौवर्णीं राजतीं वापि तुलां देवीं तु कारयेत् ।
अपि चन्दनवृक्षस्य खदिरस्यापि कारयेत् ॥
तस्यालाभे तुला कार्या यथा वाप्युपपद्यते ।

यः पुरुषः पिङ्गलो बभ्रुर्हलमुसलचक्रपाणिस्तमहं पुरुषं पिङ्गलं बभ्रुं हलमुसलवज्रपाणिमावाहयामि । स्वत एहि सूत एहि स्त्रयाम एहि नाग एहि कृष्णाजिन एहि । स्वागतमनुस्वागतम् । भगवते तुलापुरुषाय महादेवायेदमर्घ्यमिदं पाद्यमिदमाचमनीयमिदमासनञ्च प्रसाधनगन्धमाल्यधूपदीपनैवेद्यं प्रतिगृहाण प्रसीद देव तुभ्यं नमः, अक्रुद्धः सुमना भव । अथ तुलामपि मन्त्रयेत् । ऋषि-

सत्यं ब्रह्मसत्यं देवसत्यं च । अन्तःसत्येन सत्यवादिनि—

देशानां सम्पदं ब्रूहि कं देशं वर्धयिष्यसि ।
बीजानां सम्पदं ब्रूहि किं बीजं वर्धयिष्यसि ॥
राज्ञां च सम्पदं ब्रूहि कं नृपं वर्द्धयिष्यसि ।
अस्माकं सम्पदं ब्रूहि किमस्माकं भविष्यति ॥
यदा तु गुरुमात्मानमसकृत्तुलया धृतम् ।
परं चैव लघुं मन्येत्तदा कर्म समाचरेत् ॥

अग्नये पृथिव्यादिपतये स्वाहा । वायवेऽन्तरिक्षाधिपतये स्वाहा । सूर्याय दिवोऽधिपतये स्वाहा । सोमाय नक्षत्राधिपतये स्वाहा । वासुकये नागाधिपतये स्वाहा । कुबेराय यक्षाधिपतये स्वाहा । इन्द्राय देवाधिपतये स्वाहा । ब्रह्मणे त्रैलोक्याधिपतये स्वाहा । देव्यै भगादिपतये स्वाहा । सालकटङ्कटाय स्वाहा । कूष्माण्डराजपुत्राय स्वाहा । विनायकाय स्वाहा । महाविनायकाय स्वाहा । महामहाविनायकाय स्वाहा । वक्रतुण्डाय गणानां पतये स्वाहा । धर्म्माय स्वाहा । अधर्म्माय स्वाहा । तुलायै स्वाहा । तुलापुरुषाय स्वाहा । देव्यै पुनरागमनायै स्वाहा । प्रजापतिदेवाय मरुद्भ्यः सदैव पुनरागमनाय स्वाहा । सकृच्चरित्वा शुचिः पुत्री कर्मण्यो भवति । द्वितीयं चरित्वा गाणपत्यं प्राप्नोति । त्रिश्चरित्वा महादेवस्यावसथं प्राप्नोति । आषाढ्यां कार्त्तिक्यां फाल्गुन्यां वा पुण्ये नक्षत्रे एष विहितो धर्म्मः" इति (हारी० स्मृ० २८।६९–११५)।

## अथ वारुणकृच्छ्रः ।

यमः—

"ब्रह्मचारी जितक्रोधो मासेऽप्युदकसक्तुकान् ।
पिबेच्च नियताहारः कृच्छ्रं वारुणमुच्यते" ॥ इति ।

## अथाघमर्षणकृच्छ्रः ।

शङ्खः—

"त्र्यहं त्रिषवणस्नायी शुचिः स्नात्वाघमर्षणी(१) ।
मानश्च त्रिः पठेदप्सु न भुञ्जीत दिनत्रयम् ॥
वीरासनं सदा तिष्ठेत् गां च दद्यात्पयस्विनीम् ।
अघमर्षणमित्येतद्व्रतं सर्वाघसूदनम्" ॥ इति ।

विष्णुना प्रकारान्तरमभिहितम्—"अथ कृच्छ्राणि भवन्ति त्र्यहं नाश्नीयात् । प्रत्यहं—च त्रिषवणं स्नानमाचरेत् । मग्नस्त्रिरघमर्षणं जपेत् । दिवा स्थितस्तिष्ठेत् ।। रात्रावासीत । कर्म्मणोऽन्ते पयस्विनीं दद्यात्" इति(२) ( वि० स्मृ० ४६ । १–६ ) ।

---

( १ ) "मौनी स्यादघमर्षणम् । मनसा त्रिःपठेदप्सु" इति पराशरस्मृतिव्याख्यायां माधवीयायां शङ्खः ।

( २ ) अत्रायं विशेष उपलभ्यते—

प्रौढश्रीद्विजराजवंशतिलकालङ्कारहीरप्रभु-
र्भारद्वाजकुलानुगः प्रथमया यः शाखयालङ्कृतः ।
श्रीमद्वल्लभसूनुरात्मनिरतः सत्संप्रदायाग्रणीः
सारेऽस्मिन्व्रतचर्यसंज्ञक इह श्रीमान्दलाधीश्वरः ॥
निजामशाहसाम्राज्यधुरन्धरमहीपतिः ।

## अथ यज्ञकृच्छ्रः ।

"युक्तस्त्रिषवणस्नायी संयतो मौनमास्थितः ।
प्रातः स्नानसमारम्भं कुर्याज्जप्यं च नित्यशः ॥
सावित्रीं व्याहृतीश्चैव जपेदष्टसहस्रकम् ।
ॐकारमादितः कृत्वा रूपे रूपे तथान्ततः ॥
भूमौ वीरासने युक्तः कुर्याज्जप्यं सुसंयतः ।
आसीनश्चास्थितो वापि पिबेद्गव्यं पयः सकृत् ॥
गव्यस्य पयसोऽलाभे गव्यमेव भवेद्दधि ।
दध्नोऽलाभे भवेत्तक्रं तक्रालाभे तु यावकम् ॥
एषामन्यतमं यद्यदुपपद्येत तत्पिबेत् ।
गोमूत्रेण समायुक्तं यावकं चोपयोजयेत् ॥
एकाहेन तु कृच्छ्रोयमुक्तस्त्वाङ्गिरसा स्वयम् ।
सर्वपापहरो दिव्यो नाम्ना यज्ञ इति स्मृतः" ॥ इति ॥

## अथ देवकृच्छ्रः ।

"यवागूं यावकं शाकं क्षीरं दधि घृतं तथा ।
त्र्यहं त्र्यहं तु प्राश्नीयाद् वायुभक्षस्त्र्यहं परम् ॥

---

श्रीनृसिंहप्रसादेऽस्मिन् सम्पूर्णं कुरुते शुभम् ॥

इति श्रीमल्लक्ष्मीनृसिंहचरणयुगलसरोरुहभ्रमरसकलभूमण्डलमण्डनसमस्तयवनाधीश्वरश्रीनिजामशाहसमस्तसाम्राज्यधुरन्धरश्रीमन्महाराजाधिराजश्रीदलपतिराजविरचिते श्रीनृसिंहप्रसादे प्रायश्चित्तसारेऽघमर्षणकृच्छ्रः ।

कृच्छ्रं देवकृतं नाम सर्वकल्मषनाशनम्" । इति ।

## अथ पर्णकृच्छ्रः ।

जाबालिः—

"पलाशबिल्वपद्मानां पर्णान्यौदुम्बराणि च ।

अश्वत्थस्य च पर्णानि आशेदेकैककशस्तथा ॥

अहोरात्रोपवासश्च पर्णकृच्छ्रः प्रकीर्त्तितः" । इति ।

षडहसाध्योऽयम् । अत्र योगी—

"पर्णोदुम्बरराजीवबिल्वपत्रकुशोदकैः ।

प्रत्येकं प्रत्यहाभ्यस्तैः (१)पर्णकृच्छ्र उदाहृतः" ॥

पर्णः पलाशः । पर्णादिपत्राणां कुशानां चैकैकस्य क्वाथोदकेनैकैकस्मिन्दिने पिबेत् । अयं च पञ्चदशदिनसाध्यः ।

विष्णुना तु प्रकारान्तरमभिहितम्—"कुशपलाशोदुम्बरपद्मशङ्खपुष्पीवचब्रह्मसुवर्च्चलानां यत्त्रिक्वथितस्याम्भसः प्रत्यहपानं पर्णकृच्छ्रः" इति । शङ्खपुष्पी लताविशेषः । ब्रह्मसुवर्च्चला ब्राह्मीविशेषः । कुशादीनां मध्येऽन्यतमं निक्षिप्य क्वाथः कर्तव्यः ।

शङ्खलिखितौ—"पद्मबिल्वपलाशोदुम्बरकुशोदकान्येकैकमभ्यस्तानि पर्णकृच्छ्रः । समस्तान्येतानि त्रिरात्रेण पीतानि पर्णकूर्चः" इति । एवं पञ्चदशदिनसाध्यः ।

"एतान्येव समस्तानि त्रिरात्रोपोषितः शुचिः ।

---

(१) "प्रत्यहं पीतः"इति याज्ञवल्क्यस्मृतौ पाठः (३अ. ३१६ श्लो.) ।

क्वाथयित्वा पिबेदह्नि पर्णकूर्चो विधीयते" इति यमस्मरणात् ।

## अथ फलकृच्छ्रः ।

मासं फलानि क्वाथयित्वा शरीरयात्रामात्रोपयुक्तं पिबेदिति "फलैर्मासेन कथितः फलकृच्छ्रो मनीषिभिः" इति मार्कण्डेयवचनात् । फलेयत्ता मार्कण्डेयाभिहिता ।

"श्रीकृच्छ्रः श्रीफलैः प्रोक्तः पद्माक्षैरपरस्तथा ।
मासेनामलकैरेव श्रीकृच्छ्रमपरं स्मृतम् ॥
पत्रैर्मतः पर्णकृच्छ्रः पुष्पैस्तत्कृच्छ्र उच्यते ।
मूलकृच्छ्रः स्मृतो मूलैस्तोयकृच्छ्रो जलेन तु" ॥

पुष्पमूलान्यपि वृक्षाणामेव ।

## अथ शीतकृच्छ्रः ।

अयं च द्वादशदिनसाध्यः । शीतं घृतादिकं षड् दिनानि । त्र्यहं क्षीरं त्र्यहमुपवास इति ।

"त्र्यहं शीतं पिबेत्तोयं त्र्यहं शीतं पयः पिबेत् ।
त्र्यहं शीतं घृतं पीत्वा वायुभक्षस्त्र्यहं परम्" इति यमस्मरणात् ।

विष्णुस्तु दशदिनसाध्यमाह—"त्र्यहमुष्णाः पिबेदापस्त्र्यहमुष्णं पयः पिबेत् । त्र्यहमुष्णघृतं पिबेत् । एकाहमुपवासम्" इति । अयमेव शीतकृच्छ्रः ।

## अथ तप्तकृच्छ्रः ।

तत्र योगी—

"तप्तक्षीरघृताम्बूनामेकैकं प्रत्यहं पिबेत् ।
एकरात्रोपवासश्च तप्तकृच्छ्र उदाहृतः(१)" ॥

जलादिपरिमाणमाह पराशरः—

"अपां पिबेत्तु त्रिपलं द्विपलं तु पयः पिबेत् ।
पलमेकं पिबेत्सर्पिस्त्रिरात्रं चोष्णमारुतम्" ॥ इति ।

## अथवैवं तप्तकृच्छ्रः ।

"षट्पलं तु पिबेदम्भः त्रिपलं तु पयः पिबेत् ।
पलमेकं पिबेत्सर्पिस्तप्तकृच्छ्रो विधीयते" ॥ इति ।

## अथ जलकृच्छ्रः ।

तत्र विष्णुः—

"उदकादिसक्तूनां मासाभ्यवहरणे जलकृच्छ्रः" इति ।

## अथ श्रीकृच्छ्रः ।

"बिल्लैरामलकैर्वापि पद्माक्षैरथवा शुभैः ।
मासेन लोके श्रीकृच्छ्रः कथ्यते द्विजसत्तमैः" ॥ इति ।

## अथ वारुणविषकृच्छ्रः ।

"विषान्युदकसिद्धानि मासमश्नीत संयतः ।

सकृद्वा सोदकान्मासं कृच्छ्रो वारुण उच्यते" ॥ इति ।

## अथ पावककृच्छ्रः ।

"गोपुरीषयवाभ्यासो मासं नित्यं समाहितः ।
व्रतं तु यावकं कुर्यात्सर्वपापापनुत्तये" ॥ इति ।

## अथ प्रकारान्तरेण जलकृच्छ्रः ।

जाबालिः—

"अनश्नन् जलमध्यस्थस्त्वहोरात्रं जपन्बुधः ।
संवत्सरकृतं पापं जलकृच्छ्रो व्यपोहति" इति ।

जपो वारुणयुक्तानां कार्यः । योगी—

"वायुभक्षो दिवा तिष्ठेद्रात्रिं नीत्वाप्सु सूर्यदृक् ।
(१)"सहस्राष्टाधिकं जप्त्वा गायत्रीं जलसंज्ञकः" ॥

द्वितीयेऽह्नि सूर्यं दृष्ट्वाष्टोत्तरसहस्रगायत्रीजपं कृत्वा पारणं कुर्यादिति ।

## अथ गोमूत्रकृच्छ्रः ।

आतृप्तेश्चारयित्वा गां गोधूमान्यवमिश्रितान् ।
तान्गोमयोत्थान्सङ्गृह्य पिबेद्गोमूत्रयावकम्" ॥ इति ।

---

(१) "जप्त्वा सहस्रं गायत्र्याः शुद्ध्येद्ब्रह्मवधादृते"
इति याज्ञवल्क्यस्मृतौ पाठः (३ अ० ३११ श्लो०) ।

## अथ सान्तपनकृच्छ्रः ।

योगी—

(१)"कुशोदकं च गोक्षीरं दधि मूत्रं शकृत् घृतम् ।
प्राश्यापरेद्युरेवं हि कृच्छ्रं सान्तपनं चरेत्" ॥ इति ॥

पूर्वदिवसे आहारान्तरं परित्यज्य कुशोदकादीनि मेलयित्वा प्राश्य तिष्ठेत् । द्वितीयदिने उपवासं कुर्यादिति द्वैरात्रिकः सान्तपनकृच्छ्रः । यदा पूर्वेद्युरुपोष्य द्वितीयदिने समन्त्रकं कुशोदकसहितं पञ्चगव्यं समन्त्रकमेव पीयते तदा ब्रह्मकूर्च इति संज्ञां लभते । तदुक्तं पराशरेण—

"गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् ।
निर्दिष्टं पञ्चगव्यं तु पवित्रं कायशोधनम्" ॥

तत्र ताम्रवर्णाया गोमूत्रम्, श्वेताया गोमयम्, काञ्चनाभायाः पयः, नीलाया दधि, कृष्णाया घृतम्, सर्वं कपिलायाः ।

एवं पञ्चगव्यपरिमाणे तु गोमूत्रमष्टौ माषाः, गोमयस्य षोडश माषाः, क्षीरस्य द्वादश, दध्नो दश, तदर्धं कुशवारि । गायत्र्या गोमूत्रम्, गोमयं गन्धद्वारेति, आप्यायस्वेति पयः, दधिक्राव्णोति वै दधि, तेजोऽसि शुक्रमिति घृतम्, देवस्य त्वेति कुशवारि, इति ।

पञ्चगव्यमृचा पूतं होमयेदग्निसंनिधौ ।

---

(१) गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् ।
जग्ध्वा परेऽह्न्युपवसेत् कृच्छ्रं सान्तपनं चरेत्" ॥ इति ॥
या० स्मृ० पाठः (३ अ० ३१४)।

सप्तपत्राश्च ये दर्भा अच्छिन्नाग्रा शुकत्विषः ॥
एतैरुद्धृत्य होतव्यं पञ्चगव्यं यथाविधि ।
इरावती इदं विष्णुर्मानस्तोके च शंवतीः ॥
एताभिश्चैव होतव्यं हुतशेषं पिबेद्द्विजः ।
प्रणवेन समालोड्य प्रणवेनाभिमन्त्र्य च ॥
प्रणवेन समुद्धृत्य पिबेत्तत्प्रणवेन तु ।
मध्यमेन पलाशस्य पद्मपत्रेण वा पिबेत् ॥
स्वर्णपात्रेण ताम्रेण ब्राह्मतीर्थेन वा पुनः ।
यत्त्वगस्थिगतं पापं देहे तिष्ठति मानवे ॥
ब्राह्मकूर्चोपवासस्तु दहत्यग्निरिवेन्धनम्" ॥ इति ।

( पराशर० ११ अ० २८-३७ )

ब्रह्मकूर्च एव ब्रह्मकूर्चोपवास इत्युच्यते । ततश्च योगीश्वराभिहितं सान्तपनमेव ब्रह्मकूर्च इत्युच्यते । स एव ब्रह्मकूर्चोपवास इति । मिताक्षराकारास्तु पूर्वेद्युरुपोष्योक्तरीत्या पञ्चगव्यप्राशने ब्रह्मकूर्च इति वदन्तो लक्ष्यन्ते । मरीचिः—

"देवताः संप्रवक्ष्यामि ह्यानुपूर्वेण यस्य याः ।
वरुणो देवता मूत्रे, गोमये हव्यवाहनः ॥
सोमः क्षीरे, दध्नि वायुः, घृते रवि उदाहृतः ।
गोमूत्रं ताम्रवर्णायाः श्वेतायाश्चाथ गोमयम् ॥
पयः काञ्चनवर्णाया नीलायाश्च तथा दधि ।
घृतं च कृष्णवर्णाया विभक्तं वर्णगोचरम् ॥
उदकं सर्ववर्णं तु तस्य वर्णो न गृह्यते ।

(१)गोमूत्रस्य पलं ग्राह्यमङ्गुष्ठार्धं तु गोमयम् ।
क्षीरं सप्तपलं ग्राह्यं पलमेकं कुशोदकम् ।
आपोहिष्ठेति चालोड्य उद्धृत्य प्रणवेन तु ।

अग्नये स्वाहा, सोमाय स्वाहा, इन्द्राय स्वाहा, इदं विष्णुर्मानस्तोके, गायत्र्या, प्रजापते देवस्य त्वाऽस्यग्नौ जुहुयात् ।

नदीप्रस्रवणे तीरे रहस्ये निर्ऋते तथा ।
शुक्लवासाः पवित्रात्मा अहोरात्रोषितः पिबेत्" ॥

पात्राणि पालाशादीन्युक्तानि । प्रतिमासं पौर्णमास्याममावस्यां च पिबेत् ।

"ब्रह्महा परहारी च ये चान्येऽस्थिमलागताः ।
ब्रह्मकूर्चो दहेत्सर्वं यथाग्निस्तृणमेव तु" ॥ इति ॥

अथापरः ब्रह्मकूर्चः—गोमूत्रभागस्तस्यार्धं शकृत् । क्षीरस्य त्रयो द्वयं दध्नो घृतस्यैकमेकैकं तु कुशोदकस्येति ।

"गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् ।
एकैकं प्रत्यहं पीत्वा त्वहोरात्रमभोजनम् ॥
कृच्छ्रं सान्तपनं नाम सर्वपापप्रणाशनम्" ॥

इति जाबालिस्मरणात् । इदं च सप्तदिनसाध्यम् ।

---

(१) "मूत्रमेकपलं दद्यादङ्गुष्ठार्धं तु गोमयम् ।
क्षीरं सप्तपलं दद्याद्दधि त्रिपलमुच्यते ॥
घृतमेकपलं दद्यात् पलमेकं कुशोदकम्" ॥
इति पराशरस्मृतौ पाठः । ( अ० ११ श्लो० ३०-३१ )

## अथ यतिसान्तपनम् ।

शङ्खः—

"एतदेव त्र्यहाभ्यस्तं यतिसान्तपनं स्मृतम्" इति । अयमर्थः— एतदेव मिश्रितपञ्चगव्यं दिनत्रयं पिबेदिति । एषां पक्षाणां शक्त्यपेक्षया विकल्पः ।

## अथ महासान्तपनम् ।

तत्र योगी—

"पृथक्सान्तपनद्रव्यैः षडहः सोपवासकः ॥
सप्ताहेन तु कृच्छ्रोऽयं महासान्तपनः स्मृतः" ॥ इति ॥

यमः पञ्चदिनसाध्यमाह—

"त्र्यहं पिबेत्तु गोमूत्रं त्र्यहं वै गोमयं पिबेत् ।
त्र्यहं दधि त्र्यहं सर्पिस्त्र्यहं क्षीरं ततः शुचिः ॥
महासान्तपनं ह्येतत् सर्वपापप्रणाशनम्" ॥ इति ।

जाबालिरेकविंशतिदिनसाध्यमाह—

"षण्णामेकैकमेतेषां त्रिरात्रमुपयोजयेत् ।
त्र्यहं चोपवसेदन्त्यं महासान्तपनं स्मृतम्" ॥ इति ॥

## अथातिसान्तपनम् ।

तत्र यमः—

"एतान्येव तथा पेयान्येकैकं तु द्व्यहं द्व्यहम् ।

अतिसान्तपनं नाम श्वपाकमपि शोधयेत्" ॥ इति ।

## अथ चान्द्रायणम् ।

चन्द्रस्यायनमिवायनं चरणं यस्मिन्कर्म्मणि ग्रासह्रासवृद्धिभ्यां तच्चान्द्रायणम् । संज्ञायां दीर्घः । इदं च द्विविधं यवमध्यं पिपीलिकामध्यं च । यववत् प्रान्तयोरणीयो मध्ये च स्थवीय इति । एतदेव व्रतं यदा कृष्णपक्षप्रतिपदमारभ्य वक्ष्यमाणप्रकारेणानुष्ठीयते तदा द्वितीयं पिपीलिकामध्यमित्यर्थः ।

अयमत्र क्रमः—चान्द्रायणाख्यं कर्म कुर्वन् मयूराण्डपरिमितान् ग्रासान् आपूर्यमाणपक्षे तिथिवृद्ध्या भक्षयेत् । यथा प्रतिपत्प्रभृतिषु तिथिषु चन्द्रकलानामेकैकशो वृद्धिरर्द्धमासे, तद्वत्पिण्डानपि प्रतिपद्येको द्वितीयायां द्वावित्येवमेकैकशो वर्द्धयन् पौर्णमासीपर्यन्तं भक्षयेत् । ततः पञ्चदश्यां पञ्चदश ग्रासान् भुक्त्वा, ततः कृष्णपक्षे च चतुर्दश, प्रतिपदि त्रयोदश, द्वितीयायामित्यादिक्रमेणैककशो ग्रासान् ह्रासयन् भक्षयेच्चतुर्दशीपर्यन्तम् । ततश्चतुर्दश्यामेकैकं ग्रासं ग्रसित्वा अमावास्यायामुपवसेदिति यवमध्यता । तथा पूर्वोक्तक्रमेण कृष्णप्रतिपदि चतुर्दश ग्रासान् भुक्त्वैकैकग्रासापचयेन चतुर्दशीपर्यन्तं भुञ्जीत । ततश्चतुर्दश्यामेकैकं ग्रा ग्रसित्वामायामुपवासं विधाय शुक्लप्रतिपद्येकमेव ग्रासमश्नीयात् । तत एकोपचयभोजनेन पक्षभोजने निर्वर्त्यमाने पौर्णमास्यां पञ्चदश ग्रासाः सम्पद्यन्त इति पिपीलिकामध्यता युक्ता । तदाह वशिष्ठः क्रमेण—

"एकैकं वर्द्धयेत्पिण्डं शुक्ले कृष्णे च ह्रासयेत् ।

इन्दुक्षये न भुञ्जीत एष चान्द्रायणो विधिः" ॥

"मासस्य कृष्णपक्षादौ ग्रासानद्याच्चतुर्दश ।

ग्रासापचयभोजी स्यात् पक्षशेषं समापयेत्" ॥ इति ॥

तथैव शुक्लपक्षादौ ग्रासौ भुञ्जीत चापरम् ।

ग्रासोपचयभोजी स्यात् पक्षशेषं समापयेत्" ॥ इति ॥

तथा योगी—

"तिथिवृद्ध्या चरेत्पिण्डान् शुक्ले शिख्यण्डसंमितान् ।

एकैकं ह्रासयेत्कृष्णे पिण्डं चान्द्रायणं चरन्" ॥ इति ॥

अत्र विशेषमाह गौतमः—"तथा च चान्द्रायणं तस्योक्तो विधिः । कृच्छ्रे वपनं व्रतं च चरेत् । श्वोभूतां पौर्णमासीमुपवसेत् । "आप्यायस्व, सन्ते पयांसि, नवो नव" इति चैताभिस्तर्पणमाज्यहोमो हविषश्चाशुमन्त्रणमुपस्थानं च, चन्द्रमसः (१)स्वाहेति वा सर्वानेतैरेव ग्रासान् भुञ्जीत । ग्रासप्रमाणमास्याधिकारेण । चरुभैक्षसक्तुकणयावकशाकपयोदधिघृतमूलफलोदकानि हवींष्युत्तरोत्तरं प्रशस्तानि । पौर्णमास्यां पञ्चदश ग्रासान् भुक्त्वा एकैकापचयेनापरपक्षमश्नीयात् । अमावास्यायामुपोष्यैकैकोपचयेन पूर्वपक्षविपरीतमेकेषामेव चान्द्रो मासः, इति ।

---

(१) "यद्देवादेवहेडनमिति चतसृभिराज्यं जुहुयात्, देवकृतस्येति चान्ते समिद्भिस्त्रिभिः ॐ भूः, भुवः, स्वः, महः जनः, तपः, सत्यं यशः, श्रीः, ऊर्क्, इट्, ओजः, तेजः, पुरुषः, धर्मः, शिवः, इत्येतैर्ग्रासानुमन्त्रणम् । प्रतिमन्त्रं मनसा नमः"

इति याज्ञवल्क्यस्मृतिमिताक्षरायां गौतमवाक्येऽधिकम् ।

"वपनं व्रतं चरेत्"इति च व्रतं प्रायश्चित्तम्। तदर्थं च चान्द्रायणं कुर्वता वपनम्, न त्वभ्युदयार्थिना। तथा श्वोभूतां पौर्णमासीमिति पौर्णमासीमाश्रित्य चतुर्दश्यामिति यावत्। तथा—आप्यायस्वेत्यादिभिस्तर्पणम्, आज्यहोमश्च चन्द्रमस उपस्थानमन्त्रः। आप्यायस्वेत्यादयो यद्देवादेवहेडनमिति चत्वार आज्यहोमे। प्रतिमन्त्रं च होमः। देवकृतस्येत्येतद्वाक्यस्थितैः षड्भिरवान्तरवाक्यैः समिद्भिः षडाज्याहुतयः पिण्डकरणात्पूर्वं हविरामन्त्रणे मन्त्राः आप्यायस्वेत्यादयः। पिण्डकरणानन्तरमोमित्येवमादयो मन्त्रा ग्रासानुमन्त्रणे। अत्र मन्त्रान्ते नमः स्वाहेति वा प्रयुञ्जीतेत्यर्थः। ग्रासप्रमाणमास्याधिकारेणेति शिखण्डपरिमितग्रासभोजनसमर्थबालादिविषयम्। कुक्कुटाण्डाद्यामलकपरिमाणमपि स्मृत्यन्तरोक्तं शक्त्यपेक्षया योज्यम्। क्षीरादिद्रव्यहविषां शिखण्डादिपरिमितत्वं पर्णपुटकादिना सम्पादनीयम्। चतुर्दश्यामुपवासः पौर्णमास्यां पञ्चदशग्रासभोजनं तत एकैकग्रासह्रास अमावास्यायामुपवासः, पौर्णमासीपर्यन्तं पञ्चदशग्रासवृद्धिरिति द्वात्रिंशद्दिनसाध्यं चान्द्रायणं योगीश्वराभिहितचान्द्रायणापेक्षया भिन्नम्। इदं पिपीलिकामध्यम्। वैपरीत्ये यवमध्यं भवति।

## अथ प्रकारान्तरेण चान्द्रायणम्।

तत्र योगी—

"यथाकथञ्चित् पिण्डानां चत्वारिंशच्छतद्वयम्।
मासेनैवोपभुञ्जीत चान्द्रायणमथापरम्"॥ इति॥

यथाकथंचिदित्यस्यार्थः कथ्यते । दिने दिनेऽष्टौ ग्रासान् भुञ्जीत । यद्वा दिवा चत्वारो रात्रौ चत्वारः । यद्वा एकस्मिन्दिने चत्वारोऽपरस्मिन्वा दश । यद्वैकदिने उपोष्य अपरदिने षोडश । यद्वा दिनद्वयमुपोष्य तृतीयदिने चतुर्विंशतिग्रासाः । यद्वा दिनद्वयमुपोष्यापरदिने त्रिंशद्ग्रासा इति । एतेषु पक्षेषु शक्त्यपेक्षयानुष्ठानम् । अत्र तिथिह्रासेन ग्रासनियमाभावः । अस्यारम्भः शुक्लकृष्णप्रतिपदोरन्यत्र कार्यः । नैरन्तर्येणास्मिन् क्रियमाणे कदाचित्तिथिवृद्धिह्रासवशेन कदाचिद्द्वितीयादिष्वारम्भेऽपि न दोषः । चन्द्रगत्यनुसारेण त्रिंशद्दिनात्मसावनमासानुष्ठेयत्वात् । अत एव तिथ्यपेक्षया ग्रासनियमाभावः । ततश्च प्रक्रान्तमेकादश्युपवासादिभिर्न लुप्यते । एकादश्यामुपोष्य द्वादश्यां द्विगुणभक्षणं संभवतीति तिथिग्रासनियमे उपवासादिकमन्येन कारयितव्यम् ।

न च चन्द्रगत्यनुसरणाभावे चान्द्रायणशब्दः कथमिति वाच्यम् । कुण्डपायिनामयने मासमग्निहोत्रशब्दवत् । अत्र गौणस्य चान्द्रायणशब्दस्य तदर्थप्राप्त्यर्थं प्रयुक्तत्वात् । एवमत्रापि द्रष्टव्यम् ।

## अथ यतिचान्द्रायणम् ।

तत्र मनुः—

"अष्टावष्टौ समश्नीयात् पिण्डान्मध्यन्दिने स्थितः ।
नियतात्मा हविष्यस्य यतिचान्द्रायणं चरेत्" ॥ इति ।

## अथ शिशुचान्द्रायणम् ।

"चतुरः प्रातरश्नीयात् पिण्डान् विप्रः समाहितः ।
चतुरोऽस्तमिते सूर्ये शिशुचान्द्रायणं चरेत्" ॥ इति ।

वृद्धमनुनाभिहितम्—

"यथाकथञ्चित्पिण्डानां तिस्रोऽशीतीः समाहितः ।
मासेनाश्नन् हविष्यस्य चन्द्रस्येति सलोकताम्" ॥ इति ॥

## अथ ऋषिचान्द्रायणम् ।

अत्र मासमध्ये नवतिर्ग्रासा ज्ञेयाः ।

तदाह यमः—

"त्रींस्त्रीन्ग्रासान्समश्नीयात् नियतात्मा दृढव्रतः ।
हविष्यान्नस्य वै मासं ऋषिचान्द्रायणं स्मृतम्" ॥ इति ।

हारीतः—"अथ चान्द्रायणविधिमनुक्रमिष्यामः—ग्रामात् प्राचीं वोदीचीं च दिशमुपनिष्क्रम्य शुचिरुदकान्ते यज्ञे परिश्रित्यानूचानमनुकूलं पूर्णाङ्गं प्राचीरं विदध्यात् । मृद्दारुपात्राण्यार्यकृतान्युद्धृतबालं गोमूत्रमहतं धौतं वासः परिधाय त्रिवारं शुद्धवतीभिश्चाघमर्षणमन्तर्जले जपित्वा समाप्तिकेनोपस्थाय शुचिर्विधिवदाचम्याग्निं प्रणीयोपलमाधाय परिसमूह्य पर्युक्ष्य परिस्तीर्याज्यं संस्कृत्य नवव्याहृतिभिः, वृद्धः स्थविरः पुराणः कुमारः, नवो नवो भवति जायमानः, चान्द्रः स्वरूपं प्रतिमुञ्चमानो यत्रो धरण्यां विदधन्वायुरिति स्थालीपाकस्य नवो नवः" इति ।

जोत्स्ना एका चैकमेकोपचये पीडयेत् । त्रिषवणमग्निकार्यं कुर्यात् । गायत्र्या दशसहस्राणि जपेत् । दिवोत्थितः । आसीनो रात्रौ वीरासनेन । किञ्चिन्नाभिभाषेत । एतदेव व्रतं चान्द्रायणम् । तच्चात्राभक्ष्यभोजनात्, अपेयपानात्, आज्ययाजनात्, अविधियाजनात्, चाण्डालीपुल्कषीमृष्टकीगमनात्, प्रासङ्गिकपातकोपातकेभ्यश्च पुनाति । पौर्णमास्युपक्रान्तं पिपीलिकामध्यम्, अमावास्योपक्रान्तं यवमध्यम् । चतुरः पिण्डान् सायमश्नीयात्, चातुरः पिण्डान् प्रातरश्नीयात् । शिशुचान्द्रायणे भैक्ष्यान्दृष्ट्वा बहिः सकृदश्नीयात् । यतिचान्द्रायणे भैक्ष्यान्दृष्ट्वा बहिः सकृदश्नीयात् । यतिचान्द्रायणे तदेव । एतद्वै पिण्डशतं मासेन सम्पाद्य चन्द्रमसः समानतां समानलोकतां सायुज्यं च गच्छति । सर्वं तदिति सर्वः पूतात्मा स्यात् ।

एवमेव सोमायनं चतुर्थीप्रभृति चतुस्तनेन त्रिरात्रं त्रिस्तनेन त्रिरात्रं द्विस्तनेन त्रिरात्रमेकस्तनेन त्रिरात्रमेकस्तनात् प्रभृति पुनश्चतुस्तनान्तं "या ते सोम चतुर्थीस्तनूस्तया नः पाहि तस्मै नमः स्वाहेति" "या ते सोम पञ्चमी षष्ठीत्येवं यागार्थास्तिथिहोमाः, एवं स्तुत्वा एनोभ्यः पूतश्चन्द्रमसः समानतां समानलोकतां सायुज्यं च गच्छति सर्वं तरति सर्वं जयति, समाप्तौ ब्राह्मणतर्पणं दक्षिणादानं च । य एवं सोमायनं चान्द्रायणं वा धारयति यावत्तस्यान्नस्य जहुयात् । "आज्येनोपवसेत्" इति यज्ञियैः कुशपलाशादिभिः परिश्रित्य वेष्टयित्वा, अपहतवालमपनीतकेशं समाप्तिकेन उद्भ्राजन्नातृप्तिभिरित्यादिना, "अस्तु सोमाय" इत्यनेन तृतीयसवने सायं समये युक्ते संस्कृते नवो नव इति "नवो नवो भवति जायमानः" इति

मन्त्रेण गायत्र्याभिमन्त्र्य प्राश्नीयादिति सम्बन्धः । आद्यकर्मशेषं महाव्याहृतिभिः सर्वप्रायश्चित्तमित्यादिहोमसमानतां सारूप्यं [ सामान्यतीमानदूपणादिना ? ] समानप्रतिपत्तित्वं, समानलोकता समानस्थानवासित्वं, सायुज्यं तद्देहानुप्रवेशः । चतुस्तनेनेति प्रतिदिनं चतुस्तनक्षीरभोजी त्रिरात्रं जपेत् । एवं त्रिस्तनाद्यपि । तेभ्यः पापेभ्यश्चान्द्रायणमभिधायैवमेतत्सोमायनमिति चान्द्रायणधर्म्मातिदेशाः । चन्द्रोदय एव पयःपानं कृष्णचतुर्थीशुक्लद्वादशीमध्ये । यत्र तिथिक्षयो न भवेच्चतुर्विंशति दिनानि भवन्ति तदेवैतत्कर्तव्यम् ।

न च चन्द्रोदये पानादि कर्त्तुं शक्यते महानिशादौ भोजननिषेध इति वाच्यम् । प्रायश्चित्तचान्द्रायणविधायकैर्वचनैस्तस्य बाधात् । यद्वा हारीतस्मृतौ चतुस्तनत्रिस्तन इत्याद्यभिहितम् । तत्र चतुस्तनेन त्रिरात्रमित्यभिहितत्वात् । मुख एव दोह इति प्रतिभाति । अयुक्तं चेत् साक्षात्स्तनस्य तृप्तिसाधनत्वाभावात् । स्तनस्थितस्य पयस एव तृप्तिसाधनत्वात् । अग्रे च होमो विहितः । स च द्रव्यसाध्यः । द्रव्यं च दुग्धमेव । क्लृप्तत्वान्नाज्यादिकल्पत्वात् । ततश्चतुस्तनादिस्थितं दुग्धं गृहीत्वा पाने सोमेत्यादिभिर्मन्त्रैः प्रत्येकैकामाज्याहुतिं कृत्वा पयः पिबेत् । चान्द्रायणधर्मातिदेशात् चन्द्रोदय एव पयःपानम् ।

मन्त्रस्योहस्त्वेवं कर्तव्यः "या ते सोम पञ्चमी" "तनूस्तया नः पाहि तस्मै नमः स्वाहा" इति पञ्चम्यामेव । षष्ठ्यां षष्ठिपदयोगः । उत्तरत्राप्यामावास्यापर्यन्तमेवम् । एवं पुनः प्रतिपदि "प्रथमा तनूः" इत्येव प्रयोगः । ततो द्वितीयादिषु "द्वितीया तनूः" इत्यादि । एतच्चतु-

विंशतिदिनसाध्यम्। यथार्थेष्विति होमा इत्युक्तत्वाच्चतुर्थीदशमी-मध्ये तत्र तिथिक्षयो न भवेत्। चतुर्थ्यां विंशतिदिनानि भवन्ति त-देव कर्तव्यम्। एतत्सोमायनमशक्तविषयम्। शक्तविषये तु मार्कण्डेयः—

"गोक्षीरं सप्तरात्रं तु पिबेत्स्तनचतुष्टयात्।
स्तनत्रयात्सप्तरात्रं सप्तरात्रं स्तनद्वयात्॥
स्तेनेनैकेन षड्रात्रं त्रिरात्रं वायुभुग्भवेत्।
एतत्सोमायनं नाम व्रतं कल्मषनाशनम्"॥ इति।

## अथ यावकव्रतम्।

शङ्खः—

"गोपुरीषयवाभ्यां च मासं नित्यं समाहितः।
व्रतं तु यावकं कुर्यात्सर्वपापापनुत्तये"॥ इति।

## अथाघमर्षणव्रतम्।

तत्र विशेषमाह विष्णुः—"त्र्यहं नाश्नीयात्। प्रत्यहं त्रिष-वणां स्नानमाचरेत। त्रिःप्रतिस्नानमप्सु निमग्नोन्मग्नश्च त्रिरघमर्षणं जपेत्। दिवोत्थितस्तिष्ठेत्। रात्रावासीनः। कर्म्मणोऽन्ते पयस्विनीं दद्यात्" इति।

मनुः—

"त्र्यहैरुपवसेद्युक्तस्त्रिरह्नोऽभ्युपयन्नपः।
मुच्यते पातकैः सर्वैस्त्रिर्जपित्वाघमर्षणम्॥
यथाश्वमेधः क्रतुराट् सर्वपापनोदनः।

तथाघमर्षणं सूक्तं सर्वपापप्रणोदनम्" ॥

याज्ञवल्क्यः—

"अनादिष्टेषु पापेषु द्विजश्चान्द्रायणेन तु ।
धर्मार्थं यश्चरेदेव चन्द्रस्यैति सलोकताम् ॥
कृच्छ्रकृद्धर्मकामस्तु महतीं श्रियमश्नुते" ।

## अथ व्रतेतिकर्तव्यता ।

अथ कृच्छ्रचान्द्रायणसाधारणयेनेति कर्तव्यता ।

मनुः—

"महाव्याहृतिभिर्होमः कर्तव्यः स्वयमन्वहम् ।
अहिंसासत्यमक्रोधमार्जवं च समाचरेत् ॥
त्रिरह्णस्त्रिर्निशायां तु सवासा जलमाविशेत् ।
स्त्रीशूद्रपतितांश्चैव नाभिभाषेत कर्हिचित् ॥
स्थानासनाभ्यां विरहन्नष्टक्रोधः शयीत वा ।
ब्रह्मचारी व्रती तस्माद्गुरुदेवद्विजार्चकः ॥
सावित्रीं च जपेन्नित्यं पवित्राणि च शक्तितः
सर्वेष्वेव व्रतेष्वेवं प्रायश्चित्तार्थमाहृतम्" ॥ इति ॥

दिवा त्रिः, रात्रौ त्रिरिति यदत्र षड्वचनं तच्छक्तविषयम् । एवं न्यूनाधिकस्नानान्यन्यान्यशक्तिशक्तपेक्षया योज्यानि । तप्तकृच्छ्रे तु सकृदेव स्नानम् । "सकृत्स्नायी समाहितः" इति मनुस्मरणात् । याज्ञवल्क्यः—"कुर्यात्त्रिषवणस्नायी" इति । अघमर्षणं देवकृतः शुद्धवत्यस्तरसमन्दीयेत्यादिवशिष्ठादिमदर्शितानि ऋग्य-

जुःसामसु व्यवस्थितानि पवित्राणि यथाशाखं जपेत् । अविरुद्ध-कालेषु पिण्डान्सग्रासान् गायत्र्याभिमन्त्रयेत् । ग्रासानुमन्त्रणे गौतमोक्तैः ॐभूरित्यादिमन्त्रैः सह तासां गायत्र्या विकल्पः । एवं जपादिष्वेककार्याणां मन्त्रेण विकल्पः, भिन्नकार्याणां समुच्चय इति ज्ञातव्यम् । पराशरः—

"स्त्रीशूद्रस्य तु शुद्ध्यर्थं प्राजापत्यं समाचरेत्" ।

गृह्याग्नावेव होमनिषेधः। अतश्च स्त्रीशूद्रयोरपि ब्राह्मणद्वारा लौकिकाग्नौ भवत्येव । तत्र मनुना विशेषाभिधानात् । जाबालिः—

"आरम्भे सर्वकृच्छ्राणां समाप्तौ च विशेषतः ।
आज्येनैव हि यावाग्नौ जुहुयात् व्याहृतीः पृथक् ॥
श्राद्धं कुर्यात् व्रतान्ते च गोहिरण्यं च दक्षिणा" ॥

तत्र मनुना—

"गृहे गृही वसन्नेव ब्रह्मलोके महीयते ।
स्त्रीणां होमो न दातव्यः पञ्चगव्यं तथैव च" ॥

अत एव धर्मविवृतौ—

"उपवासो व्रतं होमस्तीर्थस्नानं जपादिकम् ।
विप्रैः सम्पादितं यस्य सम्पन्नं तस्य तत्फलम्" ॥ इति ।

शङ्खः—

"एकवासाश्चरेद्भिक्षां स्नात्वा वासो न पीडयेत् ।
गायत्र्या दशसाहस्र्यामाह्निकं जप उच्यते" ॥

वैशम्पायनः—

"स्नानं द्विकालमेव स्यात् त्रिकालं वा द्विजन्मनः" ।

षट्त्रिंशन्मते—

"जपहोमादि यत्किञ्चित्कृच्छ्रोक्तं संभवेन्न चेत् ।
सर्वं व्याहृतिभिः कुर्याद्गायत्र्या प्रणवेन च" ॥ इति ।

शङ्खः —

"एकवासार्द्धवासा वा लघ्वाशी स्थण्डिलेशयः" इति ।

हारीतः—"त्र्यवरं शुद्धवतीभिः स्नात्वाघमर्षणमन्तर्जले जपित्वा धौतमहतं वासः परिधाय व्याहृतिभिः कुर्याद्गायत्र्या प्रणवेन वा" इति ।

बौधायनः—"अहतं वासो वसीत सावित्रीं व्याहृतीश्चैव जपेदष्टसहस्रकृत्वः" ।

"ओङ्कारमादितः कृत्वा रूपे रूपे तथान्ततः ।
भूमौ वीरासने युक्तः कुर्याज्जाप्यं सुसंयतः ॥
आसीनः शल्यविद्धो वा पिबेद्गव्यं पयः सकृत् ।
गव्यस्य पयसोऽलाभे गव्यमेव भवेद् दधि ॥
दध्नोऽलाभे भवेत्तक्रं तक्रालाभे तु यावकम् ।
एषामन्यतमं यत्तु यदुत्पद्येत तत्पिबेत्" ॥

शल्यविद्धो भवेदित्यत्र वाशब्द उपमार्थः । शल्यविद्धवन्निश्चलासी सन्नासीत । पयः पिबेदित्यर्थः ।

यमः—

"अङ्गुल्यग्रे स्थितं पिण्डं गायत्र्या चाभिमन्त्रितम् ।
प्राश्य वामं ततः कुर्यादन्यस्याप्यभिमन्त्रणम्" ॥ इति ।

अपोऽशानकर्मानन्तरं पञ्चप्राणाहुतयोऽपि पञ्चभिर्ग्रासैः । प्रा-

णाय स्वाहेत्यादयश्च । अथो भूरित्यादिभिः सहिताः प्राणाय स्वाहेत्येवमादयो भवन्ति ।

यदा चत्वारस्त्रयो वा ग्रासाः, तत्र बौधायनोक्तो विशेषः— "चतुरोऽश्नीयात्प्राणायेति प्रथमम्, त्रयस्तदा द्वाभ्यां द्वाभ्याम्। पूर्वौ यदा द्वौ तदा द्वाभ्यामेवोत्तरम्, एकं सर्वैः" इति । अस्यार्थः—यदा चत्वारो ग्रासा भक्ष्यन्ते तदाद्यद्वितीयाभ्यां प्रथमं ग्रसेत् । तृतीयेन द्वितीयं चतुर्थेन तृतीयकम् । पञ्चमेन चतुर्थम् । यदा त्रयस्तदाद्यद्वितीयाभ्यां प्रथमम् । तृतीयचतुर्थाभ्यां द्वितीयम्। पञ्चमेन तृतीयम्। यदा द्वौ प्रथमत आरभ्य त्रिभिः प्रथमम्, अन्तिमाभ्यां द्वाभ्यां द्वितीयम् । यदा त्वेकस्तदा सर्वैरेव तं ग्रसेदिति ।

## अथ कृच्छ्रप्रत्याम्नायाः ।

मन्वाद्युक्तद्वादशवार्षिकादिचरणं मुख्यम् । तदशक्तौ द्वादशदिनान्येकैकं प्राजापत्यम् । एवं गणयमाने द्वादशवार्षिके प्राजापत्यानां षष्ट्यधिकं शतत्रयं भवति । तदशक्तौ तावत्यो धेनवः । धेन्वसम्भवे तावन्निष्कदानम् । निष्कशब्देन धेनुमूल्यमप्यभिधीयते । तथा च स्मर्यते—

"प्राजापत्यक्रियाशक्तौ धेनुं दद्याद् द्विजोत्तमः ।
धेनोरभावे दातव्यं मूल्यं तुल्यं न संशयम्" ॥ इति ।

तुल्यं सम्पूर्णम् । सम्पूर्णमूल्यदानाशक्तौ निष्कार्द्धं निष्कपादं वा दद्यात् । यदाहुः—

"गवामभावे निष्कः स्यात्तदर्द्धं पादमेव च" इति ।

मूल्यदानाशक्तौ तावन्त उपवासाः । अत्राप्यशक्तावयुतगाय-
त्रीजपः कृच्छ्रप्रत्याम्नायः ।

तथा च पराशरः—

"कृच्छ्रोऽयुतं तु गायत्र्या उपवासास्तथैव च ।
धेनुप्रदानं विप्राय सममेतच्चतुष्टयम्" ॥ इति ।

षट्त्रिंशन्मते—

"कृच्छ्रोऽयुतं तु गायत्र्या द्वादशब्रह्मभोजनम् ।
तिलहोमसहस्रं च सममेव चतुष्टयम् ॥
धेनुर्निष्कस्तदर्द्धार्द्धं प्राणायामशतद्वयम् ।
तिलहोमसहस्रं च वेदाध्ययनमेव च" ॥

वेदाध्ययनं संहितामात्रपारायणम् ।

"विप्रा द्वादश वा भोज्या पावकेष्टिस्तथैव च" इति ।

एते समानप्रत्याम्नाया महापातकेषु षष्ट्यधिकं शतत्रयं भवति । शक्त्याद्यपेक्षया द्विगुणं निष्कार्द्धकम् । व्रतविषये तु सार्द्धं प्राजापत्यद्वयम् । चान्द्रायणापनोद्य उपपातके प्राजापत्यद्वयम् । चान्द्रायणापनोद्य उपपातके प्राजापत्यत्रयम् ।

तथा चतुर्विंशतिमते—

"प्राजापत्ये तु गामेकां दद्यात्सांतपने द्वयम् ।
पराकतप्तातिकृच्छ्रे तिस्रः तिस्रस्तु गास्तथा"

इति द्वादशदिनसाध्योऽतिकृच्छ्रः । तस्य मासमाचरणे सार्द्धं सप्त प्राजापत्यकृच्छ्रा भवन्ति । 'एकैकं ग्रासमश्नीयात्' इति मनूक्तानि कृच्छ्रे । याज्ञवल्क्यस्मृतौ पाणियुक्तभोजनानि ।

कृच्छ्रे तु प्राजापत्यद्वयमेव । अतिकृच्छ्रस्थले प्राजापत्ये एकभक्तत्रयोऽपि । सायन्तनभोजनत्रयनिवृत्तावेकोपवासान्निष्पत्तिः । तथाहि—एतस्मिन्दिवा रात्रौ चेति द्विर्भोजनम् । तत्र भोजनत्रयानिवृत्तौ सार्द्धोपवासः प्राप्तो यद्यपि तथापि दिनत्रयेऽपि किञ्चित् किञ्चिद् भुज्यत इत्येकोपवास एव परिकल्पनीयः । एवं नक्तत्रयेऽयाचितत्रयेऽपि दिनत्रये उपवासः । एवं दिनत्रयं शुद्धोपवास इति षडुपवासाः प्राजापत्ये भवन्ति । एवमन्यत्राप्यूहनीयम् । वृषभैकादशगोदानयुक्ते त्रिरात्रोपवासात्मकगोघ्नव्रते तु सार्धैकादशप्राजापत्यकृच्छ्राः । पराकात्मकोपपातकव्रते प्राजापत्यत्रयम् । मासपयोव्रते सार्धं प्राजापत्यद्वयम् ।

तथा च धर्मविवृतौ—

"चान्द्रायणं मृगारेष्टिः पवित्रेष्टिस्तथैव च ।
मित्रविन्दा पशुश्चैव कृच्छ्रत्रयमथापि वा ॥
तिलहोमायुतं चैव पराकद्वयमेव च ।
गायत्र्या लक्ष्यमेकं तु समान्याहुर्मनीषिणः" ॥ इति ।

पिपीलिकादिचन्द्रायणासमर्थस्यातिधनिनो धनद्वारा प्रायश्चित्तं चिकीर्षतः प्राजापत्यप्रत्याम्नाया अष्टौ भवन्ति । तथा चतुर्विंशतिमते—अष्टौ चान्द्रायणे देयाः प्रत्याम्नायविधौ सदा" इति । प्रत्याम्नायाधिक्यात्पूर्वोक्तविषयता कल्प्या । मासातिकृच्छ्रविषयभूत उपपातके सार्द्धसप्तप्राजापत्यानि ।

तथा च षट्त्रिंशन्मते—

पराकतप्तकृच्छ्रस्थाने कृच्छ्रत्रयं चरेत् ।

सान्तपनस्य वाप्यर्धमशक्तौ व्रतमाचरेत्" ॥ इति ॥

पराकाद्यशक्तौ प्राजापत्यत्रयम् । सान्तपनाशक्तौ सार्धप्राजापत्यं चरेदित्यर्थः । सर्वत्र शक्त्याद्यपेक्षया द्विगुणं त्रिगुणादिकं कल्पनीयम् ।

## अथ तीर्थप्रत्याम्नायाः ।

तत्र सफलत्वप्रदर्शनार्थमादित्यपुराणोक्तं किञ्चिल्लिख्यते ।

"पाण्डवा राज्यलाभाय दुरितोपशमनाय च ॥
श्रीकृष्णनारदव्यासश्रीकण्ठेन्द्राजरोमशैः ।
मार्कण्डेयपुलस्त्याजसप्तर्षिप्रमुखैस्तथा ॥
द्वादश द्वादशाब्दानि कृच्छ्राण्यादाय भक्तितः ।
तीर्थैरकुर्वन्नित्यादि पुराणे श्रूयते कथा" ॥ इति ॥

स्मृतिसङ्ग्रहे स्मृत्यर्थसारोदितः प्रकारोऽस्माभिरपि लिख्यते । तत्र संकल्पपूर्वकं पद्भ्यां षष्ठियोजनगतस्य भागीरथ्यां स्नानं षडब्दकृच्छ्रसमम् । अत्रैकैकस्य योजनस्य वृद्धौ कृच्छ्रवृद्धिः परिकल्पनीया । षष्ठियोजनगतस्य षडब्दत्वाद्दशयोजनगतस्याब्दं प्रायश्चित्तं भवति । एवं च तृतीयांशाधिकक्रोशादागतस्य भागीरथ्यां विध्युक्तस्नानेनैकः कृच्छ्रो भवति । मध्ये चेत्पर्वतादिभिर्व्यवधानं न भवति। पर्वताभावे मार्गस्यादुर्गमत्वे एकयोजनगतस्य गङ्गास्नानमेकः कृच्छ्रः । अशक्तस्य त्वर्द्धयोजनादागतस्य शक्तस्यापि मार्गस्य दुर्गमत्वे त्वर्धयोजनादागतस्येत्येवं कल्पनीयम् ।

पूर्वं सप्त मातृका राक्षसभयान्नद्यो जाताः । गते च भक्षयेयुः(?) ।

न देवता अभुवन् । ततो नद्यः शुष्काः । तेषु स्थानेषु भागीरथी समभवत् । तासु विष्णुगङ्गादिसप्तमातृकाभावासु गङ्गासु स्नानं षष्टियोजनगतस्य स्नानं यदब्दकृच्छ्रसमम् । मथुरायां द्विगुणम् । सरस्वत्यां चत्वारिंशद्योजनगतस्य चतुरब्दसमम् । प्रभासे द्वारावत्यां च द्विगुणम् । यमुनासरस्वत्योर्यात्रायोजनवृद्धौ पादकृच्छ्रविधिः । ह्रासस्तु पूर्वोक्तरीत्या कल्प्यः । दृषद्वती शुतुद्री विपासा वितस्ता शरावती मरुद्वृद्धा मधुमती पयस्विनीघृतवतीत्यादिवेदनदीषु स्नानं त्रिंशत्कृच्छ्रसमम् । पञ्चदशयोजनगतस्य चन्द्रभागा वेत्रवती सरयूगोमतीदेविकाकौशिकीनित्याज्वालामन्दाकिनीसहस्रवक्त्रापोनः–पुन्यापूर्णापुन्याबाहुदागण्डकीवारुण्यादिदेवनदीषु स्नानं पञ्चदश योजनगतस्य पञ्चदशकृच्छ्रसमम् । एतासु महानदीषु परस्परसंगमे योजनगतस्य कृच्छ्रत्रयफलम् । समुद्रगामिभिर्महानदीभिः सह पूर्वोक्तदेवनदीसंगमे योजनगतस्य षट्कृच्छ्रफलम् । अनुक्तस्थलेषु यात्रायोजनसंख्यया कृच्छ्रसंज्ञा विज्ञेया । महानदेषु महानद्यर्धफलम् । सेतुरामेश्वरं पद्मनाभं श्रीरङ्गं पुरुषोत्तमं कुरुक्षेत्रं नैमिषं बदर्याश्रमं पुण्यारण्यं केशरं श्रीशैलं महालयं रुद्रकोटिं पुष्करं नर्मदामल्लिकेश्वरं कुब्जाम्रं प्रभासं काकामुखं विजयेशं पुरीन्द्रं पञ्चनदं गोकर्णं शङ्कुकर्णं मथुरामयोध्यां द्वारवतीं गयां काशीं शालग्रामं शम्बलग्राममित्यादिमुक्तिक्षेत्राणि संसेव्य गङ्गासमं फलम् । फलतश्चतुर्विंशतियोजनगतस्य नर्मदायां स्नानं चतुर्विंशतिकृच्छ्रफलम् । कुब्जिसंगमे द्विगुणं शुक्लतीर्थे चतुर्गुणम् । अष्टयोजनगतस्य तत्राब्दकृच्छ्रफलम् । कुब्जिसंगमे

द्विगुणम्। शुक्लतीर्थे चतुर्गुणम्। अष्टयोजनगतस्य तथाऽब्दकृच्छ्रफलम्। तथा पयोष्णीमपि। अत्र संगमे द्विगुणम्। षष्ठियोजनगतस्य गोदावर्यामब्दकृच्छ्रसमम्। त्रिंशद्योजनगतस्यैकादशतीर्थेषु प्रतिलोमानुलोमस्नानं षष्ठिकृच्छ्रसमम्। वञ्जरासंगमे द्विगुणम्। सप्तगोदावरे भीमेश्वरे त्रिगुणम्। कुशतर्पणे च ज्वालायां द्वादशयोजनगतस्य द्वादशकृच्छ्रसमम्। प्रणीतायामपि योजनगतस्याष्टकृच्छ्रफलम्। पूर्णायां तदर्धम्। कृष्णावेण्यां योजनसंख्यया कृच्छ्रसंख्या। तथा तुङ्गभद्रायामपि। पम्पासंगमे द्विगुणम्। हरिहरे त्रिगुणम्। भीमरथायामपि योजनसंख्यया कृच्छ्रसंख्या। कुकवती संगमे दशयोजनगतस्य पञ्चदशकृच्छ्रफलम्। मलापहारिण्यां योजनसंख्यया कृच्छ्रसंख्या। तथा निवृत्तावपि गोदावर्यां यात्रायोजनवृद्धौ पादकृच्छ्रवृद्धिः। सिंहे गुरौ सर्वत्र गौतमी जाह्नवी समा। कन्यास्थे गुरौ कृष्णावेण्यां सर्वत्र जाह्नव्यर्धम्। तुङ्गतुलास्थे गुरौ जाह्नव्यर्धम्। रवौ कर्कटकस्थे च गङ्गाद्वारे कृष्णावेण्यां मलापहारणीसंगमे त्रिंशद्योजनगतस्य त्रिंशत्कृच्छ्रसमम्। भीमरथीसंगमे द्विगुणम्। तुङ्गभद्रासंगमे त्रिगुणम्। निवृत्तिसङ्गमे चतुर्गुणम्। ब्रह्मेश्वरे पञ्चगुणम्। मल्लिकार्जुनसमीपे पातालगङ्गायां षड्गुणम्। कावेर्यां महानद्यां दशयोजनगतस्य पञ्चदशकृच्छ्रफलम्। द्वादशयोजनगतस्य द्वादशकृच्छ्रसमम्। ताम्रपर्णीतीव्रमालपयस्विनीषु सह्याद्रिपादोद्भूतासु योजनविच्छिन्नप्रवाहरूपस्वदैर्घ्यानुसारेण योजनगतस्यैकद्वित्रिकृच्छ्रफलप्रदास्ताः। विन्ध्यश्रीशैलोद्भवा द्विगुणाः। हिमाचलोद्भूतास्त्रिगुणाः। श्रुतिपुरा-

गादिषु यथाकथञ्चिदनुक्तकुल्या योजनगतस्य त्रिरात्रफलप्रदाः । महानद्यः कृच्छ्रत्रयफलप्रदाः । एकयोजनगादिषड्योजनमानाः स्व-यन्त्यः कुल्याः । ततो द्वादशयोजनगान्ता अल्पनद्यः । चतुर्विंशति-गान्ता नद्यः । चतुर्विंशतियोजनाधिकगा महानद्याः समुद्रगाश्च । तत्र च महानदीत्वव्यपदेशः । ताश्च महानद्यः । उपवाससहितं महानदीस्नानं योजनादर्वागपि कृच्छ्रसमम् । कुत्सितवनगामिन्यो नद्यः पापनदाश्च वर्ज्याः । समुद्रस्नानं सर्वत्र दर्शे कार्यम् । देवता-समीपे सरोनदीसङ्गमेषु च सर्वदा कार्यम् । पञ्चदशयोजनगतस्य समुद्रस्नानं पञ्चदशकृच्छ्रफलम् । प्रसिद्धदेवतासमीपे द्विगुणम् । तत्र स्नात्वा तद्देवतादर्शने तु त्रिगुणम् । त्रिंशद्योजनदूरात्सेतुगमनं त्रिंशत्कृच्छ्रसमम् । तत्र स्नात्वा रामेश्वरदर्शने द्विगुणम् । विन्ध्यदेशीयानां सेतुरामेश्वरे जाह्नव्यां त्रिगुणं फलम् । तथैव जाह्नवीकेदारयोरपि दक्षिणदेशीयानां जाह्नव्यां षड्गुणम् । गङ्गादेशीयानां रामेश्वरे षड्गुणम् । सर्वत्र भाषाभेदेन पर्वतादिभि-र्व्यवधानेन मार्गस्य दुर्गमत्वेनोक्तयोजनसंख्याह्रासेन कृच्छ्रादिफला-नि कल्प्यानि । प्रयासाधिक्यात् । सर्ववैष्णवमाहेश्वरसौरशाक्तेभपीठे दर्शने योजनसंख्यया कृच्छ्रसंख्या। तेषु द्विगुणम् । तीर्थतीरस्थितस्यापि योजनपरिमितात्प्रदेशादागमनान्तरेणापि विधिवत्स्नात्वा धौतं वासः परिधाय शिरोरुहेष्वार्द्रेषु सत्सु पश्चात्स्नातव्यम्। एवं द्वादशाभिषेकै-रेकः कृच्छ्रो भवति । परार्थं गते तु षोडशांशफलम् । प्रसङ्गादर्ध-फलं लभेत । आनुषङ्गेन तीर्थं प्राप्य स्नानफलमेव लभते । न या-त्राफलम् । पितृपितामहभ्रातृमातामहमातुलश्वशुरयोषार्थं वाचा-

योपाध्यायार्थं तेषां पित्रर्थं मातृष्वसृपितृष्वस्रर्थं च स्नात्वा स्वयमष्टमांशं च लभते । साक्षात्पित्रे कुर्वन्पुत्रश्चतुर्थांशं लभते । दम्पती च सपत्न्या मैथुनार्थं फलं लभेते (?)

देवलः—

"अभिसङ्गम्य तीर्थानि पुण्यान्यायतनानि च ।
प्रमुच्यते नरः पापैर्ब्राह्मणा ये तपस्विनः" ।
सर्वाः समुद्रगाः पुण्याः सर्वे पुण्या नगोत्तमाः ।
सर्वमायतनं पुण्यं सर्वे पुण्या वनाश्रयाः" ॥ इति ।

अथ सामान्येन पापनिष्कृतिहेतवः । तत्र गौतमबौधायनौ—"स्वस्य निष्क्रयणानि जपस्तपो होम उपवासो दानमुपनिषदो वेदान्तः, सर्वेषु छन्दःसु संहिता मधून्यघमर्षणम्, अथर्वशिरः, रुद्राः, पुरुषसूक्तम्, रौद्राणि, रोहिणी सामनी, बृहद्रथन्तरेषु पुरुगतिर्म्महानाम्न्यः, महावैराजम्, महादिवाकीर्त्त्यम्, ज्येष्ठसाम्नामन्यतमं बहिःपवमानं कूष्माण्डानि, पवमानाः सावित्री च" इति पावनानि । पयोव्रते शाकफलभक्षता, प्रसृतियावके हिरण्यमाशनं घृतप्राशनं सोमपानमिति शोधनानि । सर्वे शिलोच्चयाः सर्वाः स्रवन्त्यः पुण्या ह्रदास्तीर्थान्यृषिनिवासो गोष्ठपरिस्कन्द इति देशाः । ब्रह्मचर्यं सत्यवचनं सवेनमूदकोपस्पर्शम्, आर्द्रवस्त्रता, अधःशायिता, अनाशकम्, इति तपांसि। हिरण्यं गौर्वासोऽश्वो भूमिरिति कालः। एतान्येवानादेशे विकल्पेन क्रियेरन्, एनसि गुरुणि गुरूणि लघुनि लघूनि, कृच्छ्रातिकृच्छ्रौ चान्द्रायणम्" इति ।

अस्यार्थः । तस्य पापस्य निष्क्रयाणि संशोधनकारणानि ।

जपादीनामन्यतमस्यापि पापनिर्हरणहेतुत्वमस्त्येव । प्रत्येकमेनसस्तत्त्वेन निदर्शनात् । रहस्यब्राह्मणान्युपनिषदः । बृहदारण्यकादयो वेदान्ताः । उपनिषत्स्वपि बृहदारण्यकादीनां पृथगुपादानमाधिक्यद्योतनार्थम् । सर्वशाखासु पदक्रमरहिता मन्त्रग्रन्थाः सर्वेषु छन्दःसु संहिताः । मधुवाता इत्यादियजूंषि मधूनि । "ऋतं च सत्यं च"इति सूक्तमघमर्षणम् । अथर्वशिरोऽथर्ववेदैकादेशः प्रसिद्धः । "नमस्ते रुद्रमन्यवे" इत्यध्यायो रुद्राः। सहस्रशीर्षेत्यध्यायः पुरुषसूक्तम् । राजन्यरौहिणे सामनी। "इदन्तरोते मृधिता हिरण्यं यः" इत्यस्यामृचि गीयते। बृहद्रथन्तरे "अभिसिद्धि हवान्तहे, 'अमित्वाद्वरणो'"इत्यनयोर्गतिः। अयमस्मिन्प्रथमया ऋतस्येत्यस्यान्तं सामैव। "विदा मघवन्विदा" इत्याद्या ऋचो महानाम्न्यः। "पिब सोममस्ये"त्यस्यां गीतं साम महावैराजम्, विभ्राड्बृहत्पिबतु सौम्यमर्चिः" इत्यस्यां गीतं साम महादिवाकीर्त्यम् । आप्यहोमाख्यानि सामानि स्वेष्टसामानि । उपास्यै गीयते इति स्तोत्रं बहिः पवमानम् । "यद्देवादेवहेडनम्"इत्यादीनि यजूंषि कूष्माण्डादीनि। "स्वादिष्टपाय दिष्टये" इत्याद्याः ऋचः पावमान्यः । गोमयमध्यस्थितयवसाधिता यवागूः प्रसृतयावकः। गोष्ठं प्रसिद्धम्। परिस्कन्दो गोव्रजनमार्गः। सर्वप्रायश्चित्तं सर्वत्रादेशेऽनादेशे वा प्रायश्चित्तमित्यर्थः ।

विश्वामित्रः—

"उपपातकसंयुक्तेष्वनादिष्टेषु चैव हि ।
प्रकाशे च रहस्ये च अपि सन्ध्याद्यपेक्षया ॥
शक्तिजातिगुणान्दृष्ट्वा सकृद्बुद्धिकृतं लघु ।

अनुबन्धादिकं दृष्ट्वा कल्प्यं सर्वं यथागमम् ॥
प्रकाश उक्तं यत्किञ्चिद्विंशतिभागे रहस्यके ।
त्रिंशद्भागः षष्टिभागः कल्प्यो जात्याद्यपेक्षया ॥
प्रौढश्रीद्विजराजवंशतिलकालङ्कारहीरप्रभु-
भारद्वाजकुलानुगः प्रथमया यः शाखयालङ्कृतः ।
श्रीमद्वल्लभसूनुरात्मनिरतः संत्सम्प्रदायाग्रणीः
सारेऽस्मिन्व्रतचर्यसंज्ञक इह श्रीमान्दलाधीश्वरः ।
निजामशाहसाम्राज्यधुरन्धरमहीपतिः ।
श्रीनृसिंहप्रसादेऽस्मिन् सम्पूर्णां कुरुते शुभम् ॥

इति श्रीमल्लक्ष्मीनृसिंहचरणयुगलसरोरुहभ्रमरसकलभूमण्डलमण्डन-समस्तयवनाधीश्वरश्रीनिजामशाहसमस्तसाम्राज्यधुरन्धरश्रीमन्म-हाराजाधिराजश्रीदलपतिराजविरचिते श्रीनृसिंहप्रसादे प्राय-श्चित्तसारे कृच्छ्रादिप्रत्याम्नायविधिः ।

# अथ प्रायश्चित्ताकरणे दोषः ।

प्रायश्चित्ताकरणे दोषोऽपि स्मर्यते । तदुक्तं योगिना—

"प्रायश्चित्तमकुर्व्वाणाः पापेषु निरता नराः ।
अपश्चात्तापिनः कष्टान्निरयान्यान्ति दारुणान्" ॥ इति ।

तत्राभक्ष्यभक्षणमभोज्यभोजनमपेयपानमयाज्ययाजनमसत्प्रतिग्रहः परदाराभिगमनं परद्रव्यादिहरणं प्राणिहिंसा चेति शारीराण्यष्टौ । पारुष्यमनृतं विवादः श्रुतिविक्रयश्चेति वाचकानि चत्वारि । परोपतापनं पराभिद्रोहः क्रोधो लोभो मोहोऽहङ्कारश्चेति मानसानि षट् । तदेतान्यष्टादश नैरेयाणि कर्म्माणि । दृश्यन्ते चात्र बहून्यर्थवादवाक्यानि । तथा ब्रह्मपुराणे—

"कर्मणा मनसा वाचा ये धर्मविमुखा नराः ।
यमलोकेषु ते घोरां लभते परियातनाम् ॥
बाहुल्यमपि कृत्वा तु नरं कर्म्माशुभात्मकम् ।
प्राप्नोति नरकं घोरं यमलोकेषु यातनाम् ॥
प्रायश्चित्तैः शमं याति पापं कृतमसंशयम् ।
प्रायश्चित्तविहीना ये राजभिश्चाप्यदण्डिताः ॥
नरकं प्रतिपद्यन्ते तिर्य्यग्योनिं तथैव च ।
मानुष्यमपि चासाद्य भवन्तीह तथाविधाः ।
प्रायश्चित्तमतः कार्यं कल्मषस्यापनुत्तये" ॥ इति ।

तथा ब्रह्मपुराणेऽप्युक्तम् ।

"ततश्च यातनादेहं क्लेशेन प्रतिपद्यते ।

तत्कर्म्मजं यातनार्थममातापितृसम्भवम् ॥
तत्प्रमाणवयोवस्थासंस्थानैः प्राक्तनं यथा ।
विहाय सुमहागुप्तं शरीरं पाञ्चभौतिकम् ॥
अन्यच्छरीरमादत्ते यातनार्थं स्वकर्म्मजम् ।
तन्मात्रगुणसंयुक्तं नानात्मीयं स्वकर्म्मजम् ॥
दृढं शरीरमाप्नोति सुखदुःखोपभुक्तये ।
तेन भुक्त्वा स्वकर्माणि पापकर्ता नरो भृशम् ॥
सुखानि धार्म्मिको भुङ्क्ते इहानीतो यमक्षयात्" ॥ इति ।

तथा भविष्योत्तरे—

"देवतिर्यङ्मनुष्याणामधर्म्मनिरतात्मनाम् ।
धर्मराजः स्मृतः शास्ता सुघोरैर्विविधैर्वधैः ॥
नियमाचारशक्तानां प्रमादात् स्खलितात्मनाम् ।
प्रायश्चित्तैः गुरुः शास्ता न तु तैरिष्यते यमः ॥
पारदारिकचौराणामन्यायव्यवहारिणाम् ।
नृपतिः शासकः प्रोक्तः प्रच्छन्नानां च धर्मराट् ।
तस्मात्कृतस्य पापस्य प्रायश्चित्तं समाचरेत्" ॥ इति ।

## अथ पापकर्मविपाकः ।

किमयं शुभाशुभकर्म्मफलभोगो मनुष्याणामेवोतान्येषामपि पश्वादीनां तदनुयायिनाम् । तत्र पूर्वपक्षः—सर्वेषामेव । कर्म्माचरणाविशेषात् । सिद्धान्तस्तु मनुष्याणामेवेति ।

तदुक्तं विष्णुधर्मोत्तरे—

"आतिवाहिकसंज्ञस्तु देहो भवति भार्गव ।
केवलं तन्मनुष्याणां मृत्युकाल उपस्थिते ॥
याम्यैर्नरैर्मनुष्याणां तच्छरीरं भृगूत्तम ।
नीयते याम्यमार्गेण नान्येषां प्राणिनां द्विज ॥
मनुष्याः प्रतिपद्यन्ते स्वर्गं नरकमेव वा ।
नैवान्ये प्राणिनः केचित्सर्वे ते फलभोगिनः ॥
शुभानामशुभानां वा कर्म्मणां भृगुनन्दन ।
सञ्चयः क्रियते लोके मनुष्यैरेव केवलम् ॥
तस्मान्मनुष्यश्च मृतो यमलोकं प्रतिपद्यते ।
नान्यः प्राणी महाभाग फलयोनौ व्यवस्थितः ॥
याम्यलोकं प्रपन्नस्य पुरुषस्य तथा यमः ।
योनीश्च नरकांश्चैव निरूपयति कर्म्मणा" ॥ इति ।

काशीमृतप्राणिजातस्य स्वर्गादिप्राप्तिः कथमिति पुराणप्रामाण्यावसरेऽस्माभिर्विस्तरेण प्रपञ्चितमिति न प्रपञ्चितम् । तत्र सत्त्वादिगुणविशेषेण फलविशेषो भवति। सत्त्वं ज्ञानम् । इच्छाद्वेषौ रजः । अज्ञानं तमः। तत्र सात्त्विका देवत्वं यान्ति, राजसा मनुष्यत्वं तामसास्तिर्य्यक्त्वम् । सात्त्विकी गतिस्त्रिविधा उत्तमा मध्यमाधमा च । राजसी त्रिविधोत्तमा मध्यमाधमा च । तामसी त्रिधोत्तमा मध्यमाधमा ।

तत्राद्या ब्रह्मा विश्वसृजो धर्मो महदव्यक्तं चेति । आद्याद्द्वितीया यज्वानः, ऋषयः, देवा, वेदा, ज्यौतींषि, वत्सरा, पितरः, साध्याश्चेति । आद्यातृतीया तापसा यतयो ब्राह्मणगणा वैमानिकाः

नक्षत्राणि दैत्याश्चेति । तत्र द्वितीयाद्या—गन्धर्वा गुह्यका यक्षा नानाप्रकारा अनुचरा अप्सरसश्चेति । द्वितीयाद्वितीया—राजानः क्षत्रियाः पुरोहिता वादयुद्धप्रधानाश्चेति । द्वितीयातृतीया भिल्ला मल्ला नटाः कुवृत्तपुरुषा मद्यपानप्रसक्ताश्चेति । तृतीयाऽऽद्या-चारणाः सुपर्णा दाम्भिकाः पुरुषा रक्षांसि पिशाचाश्चेति । तृतीयाद्वितीया—तुरङ्गशूद्रम्लेच्छसिंहव्याघ्रवराहाश्चेति । तृतीयातृतीया-स्थावरकृमिकीटमत्स्यसर्पसरीसृपपशुशृगालाश्चेति ।

तदुक्तं मनुना—

"सत्त्वं रजस्तमश्चेति त्रीन् विद्यादात्मनो गुणान् ।
यैर्व्याप्येमान् स्थितो भावान्महान्सर्वानशेषतः ॥
यो यदेषां गुणो देहे साकल्येनातिरिच्यते ।
स तदा तद्गुणप्रायं तं करोति शरीरिणम् ॥
सत्त्वं ज्ञानं तमोऽज्ञानं रागद्वेषौ रजः स्मृतम् ।
एतद्व्याप्तिमदेतेषां सर्वभूताश्रितं वपुः ॥
देवत्वं सात्त्विका यान्ति मनुष्यत्वं हि राजसाः ।
तिर्यक्त्वं तामसः प्रायादित्येषा त्रिविधा गतिः ॥
त्रिविधा त्रिविधैषां तु विज्ञेया गौणिकी गतिः ।
अधमा मध्यमाग्र्या च कर्म्मविद्याविशेषतः ॥
स्थावराः कृमिकीटाश्च मत्स्याः सर्पाः सरीसृपाः ।
पशवश्च शृगालाश्च जघन्या तामसी गतिः ॥
हस्तिनश्च तुरङ्गाश्च शूद्रा म्लेच्छा विगर्हिताः ।
सिंहा व्याघ्रा वराहाश्च मध्यमा तामसी गतिः ॥

चारणाश्च सुपर्णाश्च पुरुषाश्चैव दाम्भिकाः ।
रक्षांसि च पिशाचाश्च तामसेषूत्तमा गतिः ॥
भिल्ला मल्ला नटाश्चैव पुरुषाश्च कुवृत्तयः(१) ।
द्यूतपानप्रसक्ताश्च अधमा राजसी गतिः ॥
राजानः क्षत्रियाश्चैव राज्ञां चैव पुरोहिताः ।
वादयुद्धप्रधानाश्च मध्यमा राजसी गतिः ॥
गन्धर्वा गुह्यका यक्षाः विविधानुचराश्च ये ।
तथैवप्सरसः सर्वा राजसेषूत्तमा गतिः ॥
तापसा यतयो विप्रा ये च वैमानिका गणाः ।
नक्षत्राणि च दैत्याश्च अधमा सात्त्विकी गतिः ॥
यज्वान ऋषयो देवा वेदा ज्योतींषि वत्सराः ।
पितरश्चैव साध्याश्च द्वितीया सात्त्विकी गतिः ॥
ब्रह्मा विश्वसृजो(२)धर्मो महानव्यक्तमेव च ।
उत्तमां सात्विकीमेतां गतिमाहुर्म्मनीषिणः" ॥ इति ।

तथा योगियाज्ञवल्क्येनाप्युक्तम्—

"आत्मज्ञः शौचवान्दान्तः तपस्वी विजितेन्द्रियः ।
धर्म्मकृद्वेदविद्यावित् सात्त्विको देवयोनिताम् ॥
असत्कर्य्यरतो धीर आरम्भी विषयी च यः ।
स राजसो मनुष्येषु मृतो जन्माधिगच्छति ॥
निद्रालुः क्रूरकृल्लुब्धो नास्तिको याचकस्तथा ।

---

(१) "झल्ला नटाश्चैव मल्लाः पुरुषाः शस्त्रवृत्तयः"॥ इति मनुस्मृतौ।

(२) "ब्रह्मविट्शूद्रजो धर्मो" इति मुद्रणाधारपुस्तके पाठः ।

प्रमादवान् भिन्नवृत्तो भवेत्तिर्यक्तु तामसः ॥
रजसा तमसा चैव समाविष्टो भ्रमन्निह ।
भावैरनिष्टैः संयुक्तः संसारं प्रतिपद्यते" ॥ इति ॥

यस्मिन् यस्मिन्करोति तस्मिन्वयसि शारीरवाचिकमानसानि प्राप्नोति । एवं ह्याह—

"यस्यां यस्यामवस्थायां यत्करोति शुभाशुभम् ।
तस्यां तस्यामवस्थायां तत्तत्फलमवाप्नुयात् ॥
शरीरेणैव शारीरं वाङ्मयेन तु वाचिकम् ।
मानसं मनसैवायमुपभुङ्क्ते शुभाशुभम्" ॥ इति ॥

मनुना हि मानसादिकर्म्मविशेषेण विपाकविशेष उक्तः ।

"चातुर्वर्ण्यस्य कृत्स्नोऽयमुक्तो धर्म्मस्त्वयानघ ।
कर्म्मणां फलनिर्वृत्तिं शंस नस्तत्त्वतः पराम् ॥
स तानुवाच धर्म्मात्मा महर्षीन्मानवो भृगुः ।
अस्य सर्वस्य शृणुत कर्म्मयोगस्य निर्णयम् ॥
शुभाशुभफलं कर्म्म मनोवाग्देहसम्भवम् ।
कर्म्मजा गतयो नृणामुत्तमाधममध्यमाः ॥
तस्येह त्रिविधस्यापि त्र्यधिष्ठानस्य देहिनः ।
दशलक्षणयुक्तस्य मनो विद्यात् प्रवर्त्तकम्" ॥

त्रिविधस्योत्तममध्यमाधमरूपगतिभेदेन भिन्नस्य वाङ्मनःकायलक्षणाधिष्ठानभेदेन त्र्यधिष्ठानस्य वक्ष्यमाणपरद्रव्याभिध्यानरूपदशलक्षणोपेतस्यैवंविधस्य देहिनः पुरुषस्य मनः प्रवर्तकं वि-

घ्यादिति तात्पर्य्यम् । दशलक्षणान्येवाहुः—

"परद्रव्येष्वभिध्यानं मनसानिष्टचिन्तनम् ।
वितथाभिनिवेशश्च त्रिविधं कर्म मानसम् ॥
पारुष्यमनृतं चैव पैशुन्यं चैव सर्वशः ।
असंबद्धप्रलापश्च वाङ्मयं स्याच्चतुर्विधम् ॥
अदत्तानामुपादानं हिंसा चैवाविधानतः ।

ब्रह्महा श्वसूकरखरोष्ट्रगोवाजिमृगपक्षिचाण्डालपुल्कसंयोनिगः ।

मद्यपः कृमिकीटपतङ्गविड्भुक्पक्षिहिंस्रसत्त्वयोनिगः । ब्राह्मणसुवर्णहर्त्ता लूताहिसरटतिर्यगम्बुचारिहिंस्रपिशाचयोनिगः । गुरुतल्पगतृणगुल्मलताक्रव्याद्दंष्ट्रियोनिगः ।

याज्ञवल्क्ययोगिनाप्युक्तम्—रौरवादिनरकेषु सूकरादिनियोनिषु च दारुणं दुःखमनुभूयानन्तरं दुरितशेषेण जननसमय एव क्षययोगादिदुःखप्रचुरेषु मानुषदेहेषु संसरन्ति । तथा हि "ब्रह्महा क्षयरोगवान् । निषिद्धसुरापः स्वतः कृष्णदन्तकः । ब्राह्मणसुवर्णहर्ता कुत्सितनखः । गुरुभार्यागामी कुष्ठी । एतदन्यसमसंसर्गी स तल्लिङ्गवान् । अन्नापहर्ता-अजीर्णान्नः । अननुज्ञाताध्यायी पुस्तकापहारी च मूकः । धान्यमिश्रकः षडङ्गुलादिमान् । विद्यमानपरदोषख्यापनशीलः पिशुनः । दुर्गन्धनासिकस्तैलहर्ता । तैलपायी कीटविशेषः । असद्दोषसंकीर्त्तनशीलः सूचको दुर्गन्धिवदनः । परदारापरद्रव्यापहारी राक्षसः । पररत्नापहारको हेमकाराख्यः । पक्षिजातिर्लक्षणहीनजातिगः । तत्र शाकहर्ता मयूरः । गन्धापहारी छुच्छुन्दरी । राजदुहिताख्या मूषिका । धान्यापहर्ता मूषकः । पानाप-

पहर्तोष्ट्रः । फलापहर्ता वानरः । जलापहर्ता पक्षिविशेषः । क्षीरापहर्ता ध्वाङ्क्षः । गृहोपस्कारमुसलाद्यपहर्ता गृहकारी चटकाख्य उच्चैःस्वरः कीटः । कांस्यापहर्ता हंसः ।

शङ्खेन विशेष उक्तः—"ब्रह्महा कुष्ठी, तैजसाद्यपहर्ता मण्डली । देवब्राह्मणाक्रोशकः खलतिर्दुर्मतिर्वा । गरदाग्निदावुन्मत्तौ । गुरुहन्ताऽपस्मारी । गोहन्ता अन्धः । धर्म्मपत्नीपरित्यागेनान्यत्र गन्ता शब्दवेधी प्राणिविशेषः । देवब्राह्मस्वापहर्ता पाण्डुरोगी । न्यासापहर्ता काणः । स्त्रीपण्योपजीवी षण्ढः । कौमारदारत्यागी दुर्भगः । मृष्टैकाशी वातगुल्मी । अभक्ष्यभक्षको गण्डमाली । वस्त्रापहर्ता पतङ्गः । शय्यापर्हता क्षपणकः। शङ्खशुक्त्यपहर्ता कपाली । दीपापहर्ता कौशिकः" इति ।

वृद्धगौतमेनापि विशेष उक्तः—"अनृतवादी उल्वणो मुहुर्मुहुः संलग्नवाक् । जलोदरवान् दारत्यागी । कूटसाक्षी उच्छूनजङ्घचरणः। विवाहविघ्नकर्ता छिन्नोष्ठः। अवगूरणाच्छिन्नहस्तः। मातृहन्ता अन्धः । स्नुषागामी वातवृषणः । चतुष्पथे विण्मूत्रविसर्जने मूत्रकृच्छ्रवान्। कान्यादूषकः षण्ढः । ईर्ष्यालुर्मशकः । पित्रा विवदमानोऽपस्मारी । न्यासापहर्तानपत्यः । रत्नापहर्तात्यन्तदरिद्रः । विद्याक्रयी पुरुषमृगः । वेदक्रियी द्विपी । बहुयाजको जलप्लवः । अयाज्ययाजको वराहः । अनिमन्त्रितभोजी वायसः । मृष्टैकभोजी वानरः । यतस्ततोऽश्नन्मार्जारः । कक्षवनदहनात् खद्योतः । दारकाचार्यो मुखगन्धः । पर्युषितभोजी कृमिः । अदत्तादायी बलीवर्दः । मत्सरी भ्रमरः। अग्न्युत्सादी मण्डलकुष्ठी। गोहर्त्ता सर्पः।

स्नेहापहारी क्षयी । आशापहारी अजीर्णी । ज्ञानापहारी मूकः । चण्डालपुल्कसीगमने अजगरः । प्रव्रजितागमने मरुपिशाचः । शूद्रीगमने दीर्घकीटः । सवर्णाभिगामी दरिद्रः । जलापहर्त्ता मत्स्यः । क्षीरापहर्ता बलाकः । वार्धुषिकोऽङ्गहीनः । अविक्रेयविक्रयी गृध्रः । राजमहिषीगामी नपुंसकः । राजाक्रोशको रासभः । गोगामी मण्डूकः । अनध्यायाध्ययनशीलः शृगालः । परद्रव्यापहारी प्रेष्यः । मत्स्यवधे गर्भवासी । देवद्रव्योपजीवी हृद्रोगी । इदं तुल्यं प्रयच्छामीति प्रतिज्ञाय ब्राह्मणस्यादानादल्पायुः । पत्नीबहुत्वे सत्येकारामे क्लीबः । स्वामिना धर्म्मे नियुक्तस्तदनुष्ठानेऽशक्तो जलोदरी । दुर्बलवधे बलवतामुपेक्षायामङ्गहीनः । व्यवहारे पक्षपाती जिह्वारोगी । स्वयंप्रवर्तितधर्म्मानुष्ठानच्छेदने प्रतिपन्नेष्टवियोगः । स्वयमग्रभुक् शूलरोगी । परिक्षीणमित्रबन्धुस्वामिस्वजनावमन्ता परिभूतवृत्तिः । अतिथिं पश्यन्नश्नन् कपालपट्टिकः । सूर्यप्रकाशे प्रतिश्रयादानादिष्टवियोगी । छद्मना गुरुस्वामिमित्रमुपचरन् प्राप्तार्थपरिभ्रंशः । विस्रम्भापहारी सर्वदुःखकारी गोनासः । गोनिर्दयश्चिपिटनासः । पथनाशको निस्तेजाः सभायाम् । गलगण्डी महदधिक्षेपी । पुण्याक्षेपी वक्रनासः । शिष्टचोर्णधर्म्मदूषकः केकराक्षः । साधुजनतपस्विदेवद्विजगुरुज्ञानयोगद्वेषी वक्रास्यः । तडागारामभेत्ता नेत्राङ्गहीनः । कृतघ्नः सर्वारम्भविकलः । परस्वाभिलाषी क्षयी ।

गौतमोक्ते विशेषः—“मौल्याद्वेदोपदेष्टा व्याघ्रः । अशस्त्रपुरुषहन्ता खरः । वृषवृषणच्छेत्ता षण्ढः । स्त्रीहन्ता बालहन्ता च कृमिः ।

अननुज्ञातपाठको जम्बूकः। शूद्राद्यः पठति स चाण्डालः। देव-द्रव्योपजीवी ह्यन्त्यजः। परद्रव्यं स्वसम्बन्धेन चिन्तयन् चण्डालः। परानिष्टचिन्तकश्चण्डालः। वृथाभिनिवेशी चण्डालः। अनृतवादी मृगः। अदत्तादाननिरतः पर्वतः। परदारोपसेवकः स्थावरः। अभिधानहीनकर्ता वृक्षः। गुरुवृद्धावमानी श्वपाकः। भगवत्कीर्तना-वमानी बधिरः। भगवद्दर्शने नमस्काराकारी जात्यन्धः। भगवन्नि-न्दकोऽङ्गहीनः। राजद्वेष्टा खञ्जः। मृषानृतवादी गद्गदः। ब्राह्म-णनिन्दको मूकः। पितृप्रतिकूलकर्तापस्मारी। मत्सरी खल्वाटः। मृष्टैकाशी वातगुल्मी। लोकपीडको दीर्घरोगी। देवालयदी-पेन स्वकार्यकर्त्ता बुद्बुदाक्षो नेत्ररोगयुतो हीनरूपो वा। देवस्त्री-रहा काकः। देवगृहदीपनाशकर्ता अन्धः। सुरद्वेष्टा मूर्च्छावान्। असत्पक्षपाती सदाद्वारी।

अथ हिंसाविशेषेण फलविशेषः। तत्र शङ्खः—ब्रह्महा कुष्ठी। गोहा अन्धः। अनेकरोगी वा। भ्रूणहा कुनखी। परदुःखदायी नित्यान्धः। परापकारनिरतो दीर्घरोगी। दृष्टयुपहर्ता अन्धः। श्रोत्रापहर्ता बधिरः। वाचोऽपहर्ता मूकः। तदुक्तम्—"ब्रह्महा कुष्ठी। गोहा अन्धः। अनेकरोगी वा। भ्रूणहा कुनखी। परदुःख-दायी नित्यान्धः। परापकारनिरतो दीर्घरोगी। एवमन्यत्रापि"।

"यदङ्गं पीड्यते येन तेन हीनोऽभिजायते।
नाकृत्वा लभते किञ्चिच्छुभं वा यदि वाशुभम्"॥ इति।

कश्यपः—"क्षेत्रहरणे क्षयी। नृवधे अर्शोवान्। स्वनारीहिं-सको जलोदरी। कर्णहर्ता कर्णमूली। ओष्ठनाशक ओष्ठरोगी।

दन्तपातकर्ता दन्तरोगी। उरुस्तम्भकारी उरुस्तभी। अग्निनाशकोऽग्निरोगी। पद्भ्यां परहन्ता विसर्पवान्। पराप्रियकारी पीडायुक्तः। धनुषा परापकारको धनुर्वातवान्। पादहन्ता पादकीली। विसृतवृत्तहन्ता असृग्दरी। शूलेन मनुष्यहा शूली। गोनयने शूलप्रक्षेपी नक्तान्धी"।

व्यासेन विशेषमुक्तम्—"पितृहा पिशाचः। मातृहा जात्यन्धः। शावहन्ता बन्ध्यः। प्राणयज्ञहन्ता मृतप्रजः। बालहाऽस्पर्शरोगी। सर्वजीवहा क्षयी। परकार्यहन्ता मूत्रकृच्छ्री। व्रणी विसर्पवान्। परदृष्टिहारी नेत्ररोगी। परजिह्वाछेत्तुर्जिह्वा व्रणवती। कृतघ्नः स्फुटिताक्षः। तृतीयज्वरयुक्तो वा। चतुर्थज्वरयुक्तः सततज्वरयुक्तो वा भवेत्। ग्रामे वने वा जन्तूनां श्वभिर्भयदाता सदा दुःखी"।

वृद्धगौतमः—"वृक्षच्छेत्ता नाडीव्रणवान् स्फुटितपाणिर्वा। प्राणिहिंसापरो मुखे कृष्णव्रणी श्वित्री बन्ध्यो वा विसर्पवान्। वल्मीकं खनित्वा सर्वहन्ता गजचर्मी ज्वरी च। भ्रूणहा स्विन्नहस्तः। अपत्यहा ग्रहणीवान्। धान्यहर्ता आखुः। कांस्यहर्ता हंसः। जलहर्त्ता प्लवः। मधुहर्ता दंशः। पयोहर्ता काकः। रसहर्ता श्वा। घृतहर्ता नकुलः। मांसहर्ता गृध्रः। धान्यापहर्ताऽचेतनो जन्तुर्मूषको वा। भोजनहर्ता मक्षिका। दुग्धहर्ता मार्जारः। तिलपिण्याकहर्ता मूषकः। अजामिषहर्ता काकः। मार्गामिषहर्ता श्येनः"।

बौधायनः—"गोगामी मधुमेही। चतुष्पादगामी मूत्रकृच्छ्री। खराश्वादिगामी मधुमेही। सवर्णागामी रक्तमेही। अन्त्यजागामी पाण्डुरोगी"।

वृद्धगौतमः—"गुरुधर्म्मपत्नीगामी वृश्चिकः सर्पो वाऽस-कृत् । मनुष्यतां प्राप्तः क्षयी कुष्ठी महोदरी प्रमेही दुश्चर्मा भगन्द-री ज्वरातिसारी दाक्षी (?) च भवेत् । मातृभगिनीगामी मधुमेही । कन्यागामी अश्मरी शूली प्रमेही मूत्रकृच्छ्री च भवेत् । कन्यागोत्र-गामी बाहुहीनः । श्वश्रूगामी सखीभार्यागामी च मूत्रकृच्छ्री । च-ण्डालीगामी दाहज्वरी । विधवागामी अश्मरीयुक्तः प्रमेही मूत्रकृ-च्छ्री च । गुर्विणीगामी क्लीबः । दासीगामी सदा कामरतः । स्वजातिपरनारीगामी कुष्ठी । वक्त्रमैथुनः खल्वाटः । स्वदारा-न्यक्रीडारतोऽल्पकेशो बधिरश्च । पुंश्चल्यो योषितो बालरण्डा दीर्घ-रोगिण्यो दास्यो वा । एतान् परदारान् दृष्ट्वा क्लीबः । पयोहर्ता बलाहकः । घृतहर्ता पिपीलिका । आसनहर्ता तित्तिरिः । अन्नहर्ता वायसः । कांस्यहारी हारीतः । रूप्यहर्ता कपोतः। काष्ठहर्त्ता (छुन-कः? ) चटकः । पुष्पापहारी दरिद्रः । भूहर्ता नरकभुक् । तृणाद्यप-हर्ता तरुः" ।

अगम्यागमने विशेषः—"गुरुभार्यागाम्युदरव्याधिमान् । आ-चार्यभार्यागामी भगन्दरयुक्तः। दारातिक्रमकारी षण्ढः। परपुरुषभा-र्यायुक्तश्च । परदारापहर्ता कुष्ठी । विनेयामैथुननिरतोऽङ्गव्याधि-मान् । गोगामी लिङ्गनाशभाक् । परयोषिद्द्रष्टा जात्यन्धो लिङ्ग-व्याधिमांश्च । प्रकीर्णमैथुनी क्लीबः" ।

शङ्खलिखितौ तु-"पर्वमैथुनी प्रमेही । परदाराभिगामी पुरुष-व्याधिमान् । अश्वाभिगामी दुश्चर्म्मा । सगोत्राभिगामी मधुमेही । मद्यपस्त्रीगामी श्लीपदी । मातृपितृभगिनीगामी अबीजी । स्वदारान्यक्री-

डाकर्ता अल्पकेशी । गुरुतल्पगो दुश्चर्म्मा । सगोत्रागामी ह्यबीजी ।

एवं पुराणेष्वपि कर्म्मविपाको दृश्यते । नन्दिपुराणे तावत्—

"नरकेषु क्रमेणैव ब्रह्महा पात्यते नरः ।
कल्पं कल्पं ततश्चान्ते स्थावरश्च प्रजायते ॥
तृणगुल्मलतावल्लीवीरुद्द्रुमविभेदतः ।
तृणभेदास्त्वगणिता गुल्मभेदास्तथा मताः ॥
लताभेदाश्च निःसंख्या वल्लीभेदास्तथैव च ।
वीरुद्भेदास्त्वसंख्याता असंख्या द्रुमजातयः ।
तेषां च देशभेदेन पुनः कष्टत्वमिष्यते ॥
ततः केनापि कालेन तथा स्थावरयोनितः ।
कर्म्म भुक्त्वा क्रमेणैव भवन्ति च सरीसृपाः ।
त्वक्त्वल्कलभेदेन देशभेदेन वाप्यथ ॥
सरीसृपादिभेदेन तत्र भुक्त्वा तु पातकम् ।
मृगेषु जायते मर्त्यो भेदैरगणितैस्ततः ॥
तत्रापि भुक्त्वा स्वं कर्म जायते पशुयोनिषु ।
तत्रापि भौतिकं भोगं भुक्त्वान्ते त्वमप्यथ ॥
मुच्यते पशुजन्मभ्यस्ततो जायेत मानुषे ।
तत्रापि नियमो नास्ति श्वपाकाद्येषु जायन्ते ॥
विप्रान्तेषु मनुष्येषु जायते पातकी नरः" ॥ इति ।

शिवधर्मोत्तरेऽपि—

"एवं पापविशुद्धाश्च सावशेषेण कर्म्मणा ।
ततः क्षितिं समासाद्य जायन्ते देहिनः पुनः ॥

तत्रानुभूय दुःखानि जायन्ते कीटयोनिषु ।
निःक्रान्ताः कीटयोनिभ्यः क्रमाज्जायन्ति पक्षिणः ॥
संक्लिष्टाः पक्षिभावेन जायन्ते मृगयोनिषु ।
मृगदुःखमतिक्रम्य जायन्ते पशुयोनिषु ॥
पशुयोनिं समासाद्य पुनर्जायन्ति मानुषाः ।
एवं योनिषु सर्वासु परिभ्राम्य क्रमेण तु ॥
कालान्तरवशाद्यान्ति मानुष्यमतिदुर्लभम् ।
उत्तमं चापि मानुष्यं प्राप्नुयुः पुण्यगौरवात् ॥
विचित्रा गतयः प्रोक्ता कर्म्मणां गुरुलाघवात् ।
ततो मनुष्यतां प्राप्य व्याधिभिस्तत्र पीड्यते ॥
कुष्ठरोगेण घोरेण ब्रह्महत्यां प्रयोजयन्" ॥ इति ।

स्कान्दे रेवाखण्डे—

"बुभुक्षितेषु भृत्येषु य एकोऽश्नाति मानवः ।
श्वयोनिं स समासाद्य चण्डालो जायते नरः ॥
वेदोक्तं यः परित्यज्य धर्म्ममन्यं समाचरेत् ।
दशवर्षसहस्राणि श्वयोनौ जायते ध्रुवम् ॥
वेदार्थनिन्दका ये च ये च ब्राह्मणनिन्दकाः ।
इह जन्मनि शूद्रास्ते मृताः श्वानो भवन्ति हि ॥
पिता माता गुरुर्भ्राता अन्यो वा विकलेन्द्रियः ।
भवन्ति नादृता यैस्तु ते भवन्ति नराधमाः ॥
इह मानुषलोकेऽस्मिन् दीनान्धास्ते भवन्ति च ।
ये त्यजन्ति स्वका भार्या मूढाः पण्डितमानिनः ।

ते यान्ति नरकं घोरं तामिस्रं नात्र संशयः ॥
तत्र वर्षशतस्यान्ते इह मानुषतां गतः ।
दुश्चर्म्मा दुर्भगश्चैव दरिद्रः संप्रजायते ॥
जायते गृध्रसीयुक्तः परभार्योपसेवकः ।
गद्गदोऽनृतवादी स्यात् मूकश्चैव गवानृते ॥
अन्नं पर्युषितं विप्रे ददद्वै कुब्जतां व्रजेत् ।
अदत्वा भक्ष्यमश्नाति योऽनपत्यो भवेत्तु सः" ॥ इति ॥

ब्रह्मपुराणे—

"यदि पुत्रसमं शिष्यं गुरुर्जह्यादकारणम् ।
आत्मनः कामकारेण सोऽपि हिंस्रः प्रजायते ।
आशापहर्ता तु नरः कृमियोनौ प्रजायते ॥
विश्वासहर्ता तु नरो मीनो जायेत दुर्मतिः ।
उपस्थिते विवाहे तु यज्ञे दाने महोत्सवे ॥
मोहात्करोति यो विघ्नं स मृतो जायते कृमिः ।
जलप्रवहणं यस्तु भिन्द्यान्मत्स्यो भवेत्तु सः ॥
लभेद् देवलको राजन् योनिं चाण्डालसंज्ञिताम् ।
मृतस्यैकादशाहे तु भुञ्जन् श्वा चाभिजायते" ॥

गारुडे—

"कूटसाक्ष्यप्रदाः पापा अमेध्यकृमयश्चिरम् ।
भूत्वा भवन्ति सर्पास्ते पिशाचास्तदनन्तरम् ॥
गुरुमित्रद्रुहः पापा ये च स्वामिद्रुहो जनाः ।
द्विजशिष्यद्रुहश्चैव कृतघ्ना नास्तिकास्तथा ॥

त्यागिनो बान्धवानां च त्यागिनः शरणार्थिनाम् ।
अमेध्यकृमयः सर्वे मृगव्याधा भवन्ति हि ॥
उरुरोमगणोपेता जायन्ते शम्बुका जले ।
चन्द्रार्कग्रहणे भुक्त्वा जायते कुञ्जरो नरः ॥
अवमत्य च ये यान्ति भगवत्कीर्तनं नराः ।
बाधिर्यमुपयान्त्याशु ते वै जन्मनि जन्मनि ॥
पश्यन्तो भगवद्द्वारं तामसास्तत्परिच्छदम् ।
अकृत्वा तत्प्रणामादि ये यान्ति पुरुषाधमाः ॥
जात्यन्धास्तेऽभिजायन्तेऽप्यङ्गहीनापरिग्रहाः ।
पङ्गवः पादहीनाश्च कुष्ठिनो भुवि ये नराः ॥
विष्णुच्छाया ध्रुवं तैस्तु लङ्घिता स्यान्न संशयः"॥इति।

शिवधर्मोत्तरे—

"विप्रः पञ्च महायज्ञानकृत्वा योऽन्नमश्नुते ।
विड्वराहो भवेन्नित्यं क्रव्याशी व्याध एव च ॥
द्विजस्त्वेकशफानां च विक्रयाज्जायते मृगः" ॥

वायुसंहितायाम्—

"खरो वै बहु याचित्वा काकोऽमन्त्रितभोजनात् ।
अपरीक्षितभोजी स्याद्वानरो विजने वने ।
अन्नं पर्युषितं विप्रे ददद्वै कुणठतां व्रजेत्" ॥

उमामहेश्वरसंवादे—

"अग्निहोत्रं भवेद्यस्य न कुर्यात्तस्य रक्षणम् ।
पर्वातिक्रमकारी तु मृगत्वं याति वै द्विजः ॥

वेदोपजीविजा पापाः स्त्रीलोलाः सततं च ये ।
भवन्ति चेह काकास्ते चिरं विड्भुज एव च ॥
पायसं कृशरं चैवं हवींषि मधुराणि च ।
अदत्वा चाग्निविप्रेभ्यो प्राशनाद् भुजगो भवेत्" ।

नारदीयपुराणे—

"भर्तृसौख्येन या नारी सौख्ययुक्ता न जायते ।
सा श्येनी जायते राजन् त्रिवर्षाणि च पञ्च च ॥
वाचा चाक्रोशिका या तु सन्निरुद्ध्य पतिं ह्रिया ।
अकार्यं कारयेत्पापा सा नारी वल्गुरी भवेत् ॥
भर्तुरर्थे हि या वित्तं विद्यमानं न यच्छति ।
जीवितं वा वारारोहे विष्ठायां जायते कृमिः ॥
कृमियोनिविनिर्मुक्ता काष्ठकीटा भवेत्तु सा ।
न साधयन्ति कार्याणि प्रभूणां ये विचेतसः ॥
भूत्वा वेतनभोक्तारो जायन्ते भूलता हि ते" ॥ इति ।

स्कान्दे नागरखण्डे—

"प्राप्नुवन्ति कुदेशे च जन्म ये हेतुवादकाः ।
स्वामिद्रोहरता ये च कुक्कुटे जन्म चाप्नुयुः ॥
अदत्त्वा ये तथाऽश्नन्ति पितृदेवद्विजातिषु ।
दुर्भिक्षे जनतापे च कुदेशे जन्म चाप्नुयुः ॥
ये च कुर्वन्ति दाम्पत्योर्विवादं सानुरागयोः ।
विरूपा भ्रममाणाश्च सर्वलोकविगर्हिताः ॥
दरिद्रा जायया भ्रष्टा भवन्ति विगतायुषः ।

कन्यादाने च विघ्नं यो विक्रयं यः करोति वा ॥
स कन्याः केवलं सूते न पुत्रं केवलं क्वचित् ।
जायन्ते ताश्च बन्धक्यो विधवा दुर्भगास्तथा" ॥ इति ।

स्कान्दे प्रभासखण्डे—

"यैर्न दत्तं नरैः किंचित्तेषां चिह्नं दरिद्रता ।
जायन्ते रोगिणो रौद्रा हिंसाः कुब्जाश्च वामनाः ॥
अपुत्रा कलहाक्रान्ताः परदारोपसेवकाः ।
कुदम्भाश्चपला लुब्धा मूर्खा निष्ठुरभाषिणः ॥
दानहीना भवन्त्येते देवब्रह्मस्वभक्षकाः" ॥ इति ।

विष्णुधर्मोत्तरे—

"यद्यत्परस्याचरति तत्तदस्योपजायते ।
प्राप्नोति तादृशीं बाधां कर्मणा स्वकृतेन यः ॥
तस्याप्येतादृशी बाधा ज्ञेया जन्मनि जन्मनि ।
तस्मात्सर्वप्रयत्नेन परबाधां विवर्जयेत्"॥ इति ।

रेवाखण्डे—

"मानकूटं तुलाकूटं कूटसाक्ष्यं वदन्ति ये ।
नरके तेऽन्धतामिस्रे प्रपच्यन्ते नराधिप ॥
शतसाहस्रिकं कालं मुषित्वा तत्र ते नराः ।
इह शत्रुगृहे बद्धा भ्रमन्ते कालमोप्सितम् ॥
कुनखी स्वर्णहरणान्मूकः पुस्तकहारकः ।
फलान्याहरतोऽपत्यं म्रियते नात्र संशयः" ॥ इति ॥

वामनपुराणे—

"चाण्डालादन्त्यजाद्वापि प्रतिगृह्णाति दक्षिणाम्।

याजको यजमानस्तु सोऽश्मान्तः स्थलकीटकः" ॥ इति॥

## अथ प्रेतत्वजननकर्माणि।

अथ प्रेतत्वादिहेतुना नानाविधपापविशेषाद्विपाकविशेषः।

पद्मपुराणे—

"अयाज्ययाजकश्चैव याज्यानां च विवर्जकः।

विरतो विष्णुविद्यासु स प्रेतो जायते नरः॥

सामान्यदक्षिणां लब्ध्वा गृह्णात्येको विमोहितः।

नास्तिक्यभावनिरतः स प्रेतो जायते नरः" ॥ इति ॥

स्कान्दे चमत्कारखण्डे—

"यो भवेन्मानवः क्षुद्रस्तथा पैशुन्यकारकः।

ब्राह्मणान्वयसंभूतो वृथामांसाशनश्च यः॥

प्राणिनां हिंसको नित्यं स प्रेतो जायते नरः।

कन्यां यच्छति वृद्धाय नीचाय धनलिप्सया॥

कुरूपाय कुशीलाय स प्रेतो जायते नरः।

देवस्वगुरुवित्तानि गृहीत्वा योऽनुगच्छति।

विशेषाद् ब्राह्मणेन्द्राणां स प्रेतो जायते नरः॥

दीयमानस्य वित्तस्य ब्राह्मणेभ्यस्तु पापकृत्।

विघ्नमाचरते यस्तु स प्रेतो जायते नरः॥

शूद्रान्नेनोदरस्थेन ब्राह्मणो म्रियते यदा।

त्रिकालज्ञो वेदवेदी धर्म्मज्ञोऽथ षडङ्गवित् ॥
कुलदेशोचितं कर्म्म त्यक्त्वान्यच्च समाचरेत् ।
कामाद्वा यदि वा मोहात् स प्रेतो जायते नरः ॥
उच्छिष्टस्य विशेषेण अन्तरिक्तमृतस्य च ।
विषाग्निजलमृत्यूनां तथा चैवात्मघातिनाम् ।
प्रेतत्वं जायते नूनं सत्यमेव न संशयः" ॥ इति ॥

विष्णुधर्म्मोत्तरे—

"असहिष्णुतयान्यस्य गुणानां कारणं विना ।
महत्पापं समुत्पन्नं तदस्य प्रेतकारणम् ॥
ब्रह्मस्वहारिणश्चैते पापात् प्रेतत्वमागताः ।
परदाररताः केचित् स्वामिद्रोहरताः परे ॥
मित्रद्रोहरताः केचित् देशेऽस्मिन् भृशदारुणे ।
स्वकर्म्मविच्युताः सर्वे जायन्ते प्रेतयोनिषु" ॥

तथा- अग्निपुराणे—

"मातरं पितरं वृद्धं ज्ञातिं साधुजनं तथा ।
लोभात्त्यजति यस्त्वेतान् पिशाचो जायते नरः ॥
निन्दको द्विजदेवानां गीतावाद्यरतः सदा ।
वृद्धं बालं गुरुं विप्रं योऽवमत्य भुनक्ति वै ॥
कन्यां ददाति शुल्केन पिशाचो जायते नरः ।
न्यासापहर्ता मित्रध्रुक् परपाकरतः सदा ।
निर्दोषं सुहृदं भार्यां त्यजन् काले न याति यः ॥
न सहेत यशस्तेषां पिशाचो जायते नरः ।

हस्त्यश्वरथयानानि मृतशय्यासनानि च ॥
कृष्णाजिनं तु गृह्णाति अनापदि तु यो द्विजः ।
तथोभयमुखीं दोलां सशैलां मेदिनीं द्विजः ॥
कुरुक्षेत्रं च यद्दानं चण्डालात् पतितात्तथा ।
मासिके च नवश्राद्धे भुञ्जन् प्रेतान्नमेव च ॥
भूमिकन्यापहर्ता च पिशाचो जायते नरः" ॥ इति ।

उमामहेश्वरसंवादे—

"अपहृत्य च देवस्वं ब्रह्मस्वं च तथा परम् ।
दत्तापहारदानाच्च पैशाच्यं याति वै नरः ॥
योनिकार्यं च यो देवि अहितेन तु कारयेत् ।
सोऽपि याति पिशाचत्वं स्वामिद्रोहेण मानवः ॥
स्वामिद्रव्यं गृहीत्वा तु न यजेन्न ददाति च ।
आत्मनः पोषको मूढः पिशाचत्वं स गच्छति ॥
मठाधिपत्यं यो देवि कुरुते मदमोहितः ।
शूद्रानुग्रहकर्ता च पिशाचो जायते नरः ॥
अधर्म्मं धर्म्ममित्याहुर्ये तु मोहवशं गताः ।
हर्तारः परदाराणां चौर्येण बलतोऽपि वा ॥
अरण्ये निर्जले देशे भवन्ति ब्रह्मराक्षसाः ।
संयोगं पतितैर्गत्वा परस्यैव च योषितम् ॥
अपहृत्य च विप्रस्वं भवति ब्रह्मराक्षसः ।
गुरुं हुंकृत्य त्वंकृत्य विप्रं निर्जित्य वादतः ॥
अरण्ये निर्जले देशे भवति ब्रह्मराक्षसः ।

ये ब्राह्मणान् प्रद्विषन्ति गर्वितास्ते हि राक्षसाः ।
आचार्यमृत्विजं चैव गुरुं चैव तपस्विनम् ।
मुनींश्चाप्यवमन्यन्ते ते भवन्तीह राक्षसाः" ॥ इति ॥

स्त्रियोऽप्येतेषु निमित्तेषु पूर्वोक्तास्वेव जातिषु स्त्रीत्वमनुभवन्ति । "स्त्रियोऽप्येतेन"इति मनुस्मृतेरिति दिङ्मात्रमिदं प्रपञ्चितम्। विस्तरतोऽसामर्थ्यादिति ।

प्रौढश्रीद्विजराजवंशतिलकालङ्कारहीरप्रभु–
र्भारद्वाजकुलानुगः प्रथमया यः शाखयालङ्कृतः ।
श्रीमद्वल्लभसूनुरात्मनिरतः संतसम्प्रदायाग्रणीः
सारेऽस्मिन्व्रतचर्यसंज्ञक इह श्रीमान्दलाधीश्वरः ।
निजामशाहसाम्राज्यधुरन्धरमहीपतिः ।
श्रीनृसिंहप्रसादेऽस्मिन् सम्पूर्णं कुरुते शुभम् ॥

इति श्रीमल्लक्ष्मीनृसिंहचरणयुगलसरोरुहभ्रमरसकलभूमण्डलमण्डनसमस्तयवनाधीश्वरश्रीनिजामशाहसमस्तसाम्राज्यधुरन्धरश्रीमन्महाराजाधिराजश्रीदलपतिराजविरचिते श्रीनृसिंहप्रसादे प्रायश्चित्तसारे प्रायश्चित्तानुष्ठाने कर्मविपाकनिरूपणम् ।



## अथ प्रायश्चित्तसारसमाप्तिश्लोकाः ।

व्यग्रं सिंहवदुत्तमाङ्गमुररीकुर्वन्नपि स्थेयसः
कारुण्यादभयप्रदाननिपुणैरालोकनानां क्रमैः ।
आह्लादं निजपादपङ्कजजुषां यः कल्पयत्यन्वहं
प्रह्लादप्रणयी स नो वितनुताद् भद्रं परः पूरुषः ॥ १ ॥

यो लोकस्य गुरुर्विशारदजना यं भावयन्ते गुरुं
येनैतद्गुणोदहारि गुरवे तस्मै नमः सर्वदा ।
यस्माद्वेदपथः स्थिरोऽजनि जने यस्य प्रसादाद्रति—
र्यस्मिन्सर्वगुणा गुरौ हृदि सदा तं त्वां नृसिंहं भजे ॥२॥

प्रौढश्रीद्विजराजवंशतिलकालङ्कारहीरप्रभु—
र्भारद्वाजकुलानुगः प्रथमया यः शाखयालङ्कृतः ।
श्रीमद्वल्लभसूनुरात्मनिरतः सत्संप्रदायाग्रणीः
प्रायश्चित्तविचारणातिचतुरः श्रीमान्दलाधीश्वरः ॥ ३ ॥

निजामशाहसाम्राज्यधुरन्धरमहीपतिः ।
श्रीनृसिंहप्रसादेऽस्मिन्सम्पूर्णं कुरुते शुभम् ॥ ४ ॥

इति श्रीमच्चतुर्दशभुवनैकनाथमहेन्द्रादिदेवगणपूजितचरणकमल—सदा-
डम्बरव्याप्तभुवनत्रय-भक्तानुग्रहकारि-प्रसन्नवदन-प्रह्लादप्रणयवर-
दकरभाव-करदानेकराजाभयकर-जगदेकसुन्दर-श्रीलक्ष्मीनृसिं-
हचरणयुगलसरोरुहभ्रमर-सूर्यवंशतिलक-औत्कलतैरभुक्तगौ-
डगुर्जरमालवमागधपाञ्चालकर्णाटान्ध्रानेकप्रौढराजस्पृह-

णीयकीर्ति-सकलभूमण्डलाखण्डलादिङ्मण्डलीमण्डनीयमाननि-
जभुजार्जितप्रतापासादितसकलसाम्राज्यपरमवैभवस्वपदस्थवि-
च्युतसंस्थापितानेकमण्डलाधीश्वर-सकलसामन्तचक्रचूडा-
मणिकिरणरञ्जितचरणकमल-सकलभूमण्डलमण्ड-
नश्रीमत्प्रौढप्रतापमहाराजाधिराज-श्रीसर्वपुरीकुन्द-
रीदेवगिरिपुरीवराधीश्वर-समस्तयवनाधीश्वर-
श्रीमन्निजामशाहसमस्तकरणाधीश्वर-सक-
लविद्याविशारदयाज्ञवल्कीययजुःशाखा-
प्रवर्तक-द्विजराजकुलालङ्कारहीरवैष्ण-
वधर्मप्रवर्त्तक-श्रीवल्लभात्मज-श्रीव-
ल्लभपण्डितप्रसादासादितश्रीसू-
र्यपण्डिताभिध-गुरुमन्त्रादिप्र-
णीतनीतिशास्त्राभिज्ञ-महा-
प्रभुस्वकार्यावेक्षणप्रतिनि-
धीकृत-श्रीमहाराजश्री-
दलपतिराजविरचिते
श्रीनृसिंहप्रसादे
प्रायश्चित्तसारः
सम्पूर्णः ।

---

समाप्तोऽयं प्रयाश्चित्तसारः षष्ठः ।

# (१) शोधनपत्रम् ।

| अशुद्धं | शुद्धं | पृष्ठे | पङ्क्तौ |
|---|---|---|---|
| निश्चयमु | निश्चय उ | ३ | ८ |
| स्यात् दे | स्यादे | ५ | ४ |
| पातकं | पातके | ५ | १३ |
| सहसादिषु | महदादिषु | ५ | १३ |
| चातुर्विधं | चातुर्वैध्यो | ६ | २ |
| विकल्पं | विकल्पी | ६ | २ |
| मथनं | मथने | ६ | ६ |
| द्विजेऽकृते | द्विजोऽकृते | ६ | १७ |
| दङ्कुलि | दङ्कुल | ६ | १० |
| लङ्क | लङ्का | ६ | ११ |
| रूपञ्च | रूपपञ्च | १० | ४ |
| पैशून्य | पैशुन्य | १० | ७ |
| कषा | कर्षा | १० | १० |
| दृकी | वृक्या | १० | ११ |
| प्रेक्ष | प्रेष्य | ११ | ५ |
| संयोगं चै | संयोगश्चै | ११ | २१ |
| पूर्ति स्वन्ति, | पूतिम्रुत्ति | १५ | १८ |
| यथार्थः | यथार्थं | १७ | २० |
| सत्म | सत्य | १७ | २० |
| वोप | श्चोप | २१ | १७ |
| दङ्कुलि | दङ्कुल | २२ | १० |

( १ ) अत्र मुद्राकरदोषा व्याकरणाशुद्धयोऽपि संशोधिताः ।

| अशुद्धं | शुद्धं | पृष्ठे | पङ्क्तौ |
|---|---|---|---|
| वेरे | वरे | २३ | १० |
| कर्तव्यं | कुर्यात् | २३ | २१ |
| पर्षभूम्ना | पर्यङ्कूम्ना | ३० | ७ |
| उपदेष्ट | उपदेष्टु | ३१ | ६ |
| यदु | यतु | ३१ | ६ |
| यत्प | यं प | ३३ | ६ |
| शिष्टानां | शिष्टा वा | ३३ | २० |
| भविष्य | हविष्य | ३४ | ११ |
| स्नातं | स्रोतः | ३७ | ११ |
| तान | वैतान | ३४ | २१ |
| धोते | धीयते | ३८ | १८ |
| अश्व | अश्व | ४४ | १५ |
| त्रस्न | त्रस | ४५ | १० |
| चतुर्था | चतुर्थं | ४८ | ७ |
| स्रोव | स्रोव | ६३ | २ |
| पैशुन्य | पैशुन्य | ६६ | १६ |
| कुच्छं | कृच्छ्रं | ७० | १७ |
| षट्रिं | षट्त्रिं | ७१ | ३ |
| मृते | मृताः | ७३ | २२ |
| विष्णुः | विष्णु | ७५ | ९ |
| धिके | धिकं | ७६ | १६ |
| वाषिक | वार्षिक | ८८ | ११ |
| सेव | मेव | ६५ | ३ |
| कद्रू | कृद्र | ६७ | ६ |
| श्वपाका | श्वपाकी | ६८ | १०३ |
| मार्या | भार्या | ९६ | १७ |

| अशुद्धं | शुद्धं | पृष्ठे | पङ्क्तौ |
|---|---|---|---|
| बाला | बला | १०८ | ६ |
| प्रासादा | प्रासाद् | १०८ | १४ |
| बस्तो | बस्तं | ११० | १४ |
| चारित | चरित | ११२ | ११ |
| पत्रिणः | पतत्रिण | ११६ | ७ |
| पुर्वं | पूर्वं | १३१ | ३ |
| लम्य | लभ्य | १३१ | १६ |
| नेऽकरा | ने आकरा | १३२ | १४ |
| सुरभौ | सुरभिः | १३४ | १६ |
| परीक्षन्तः | परीक्षमाणाः | १३७ | १५ |
| वेद्धी | वेद्मधी | १४९ | २ |
| कार्यं | कार्यं | १५१ | ५,९ |
| ज्ञेयं अस | ज्ञेयमस | १५२ | ८ |
| कृत्या | कृत्वा | १५२ | १८ |
| सभादि | सभा | १५२ | १८ |
| मृगह | मृगाहि | १५४ | ११ |
| द्व्यह | त्र्यह | १५४ | १४ |
| महामद्यो | महानद्यो | १६० | ४ |
| शूद्रग्रहणं | शूद्रहणं | १६० | १० |
| सपीपे | समीपे | १६० | २२ |
| ध्यनेन | ध्ययनेन | १६२ | ८ |
| क्तमघर्षण | क्ताघमर्षण | १६८ | २ |
| महापराय | महापाराय | १७४ | ३ |
| प्रतिपा | प्रतिप | १८२ | १० |
| कृ | कृत | १८२ | १८ |
| पर्यक्षं | पर्युक्षं | १८६ | १७ |

| अशुद्धं | शुद्धं | पृष्ठे | पङ्क्तौ |
|---|---|---|---|
| पाप | पापाप | १८९ | २० |
| चन्द्रा | चान्द्रा | २०५ | १६ |
| भाम | भीम | २०८ | ६ |
| कुकव | ककुद्म | २०८ | १० |
| प्रतिपद्यते | प्रपद्यते | २१५ | १० |
| वत्सरा | वत्सराः | २१५ | २१ |
| असत्कर्य | असत्कार्य | २१७ | १८ |
| वेदक्रियी | वेदविक्रयी | २२० | १८ |
| शाव | शावक | २२३ | ७ |
| जायन्ते | जायते | २२५ | १८ |
| क्षेत्रं | क्षेत्रे | २३३ | ४ |
| साराः | सारः | २३६ | २० |



# THE PRINCESS OF WALES SARASVATI BHAVANA TEXTS.

Edited by

GOPINATH KAVIRAJ, M. A.

No. 1—The Kiraṇāvālī Bhāskara, (किरणावलीभास्कर) [वैशेषिक],
a Commentary on Udayana's Kiraṇāvalī, Dravya section, by Padmanābha Miśra.
Ed. with Introduction and Index by Gopinath Kaviraj, M.A, Rs. 1-1.

No. 2—The Advaita Chintāmaṇi, (अद्वैतचिन्तामणि) [वेदान्त],
by Rangoji Bhaṭṭa,
Ed. with Introduction etc by Nārâyaṇa S'āstri Khiste Sāhityāchārya. Rs 1-12

No. 3—The Vedānta Kalpalatikā, (वेदान्तकल्पलतिका) [वेदान्त],
by Madhusūdana Sarasvatī.
Edited with Introduction etc. by Rāmājñā Pāṇḍeya Vyākaraṇāchārya. Rs. 1-12

No. 4—The Kusumāñjali Bodhanī, (कुसुमाञ्जलिबोधिनी) [न्याय],
a Commentary on Udayana's Theistic Tract, Nyāya Kusumāñjali, by Varadarāja
Ed. with Introduction etc. by Gopinath Kaviraj, M.A, Rs. 2-0

No. 5—The Rasasāra (रससार) [वैशेषिक], a Commentary on Udayana's Kiraṇāvalī, Guṇa Section, by Bhaṭṭa Vādīndra.
Ed. with Introduction etc. by Gopīnath Kaviraj, M.A. Rs. 1-2

No. 6—(Part I)-The Bhāvanā Viveka (भावनाविवेक) [मीमांसा],
by Maṇḍana Miśra, with a Commentary by Bhaṭṭa Umbeka.
Ed. with Introduction etc. by M. M. Gangānātha Jhā, M. A., D. Litt. Rs. 0-12

No. 6-(Part II)—Ditto Ditto Rs. 0-12

No. 7-(Part I)-The Yoginīhṛdaya dīpikā, (योगिनीहृदयदीपिका) [तन्त्र], by Amṛtānanda Nātha, being a Commentary on Yoginīhṛdaya, a part of Vāmakeśvara Tantra.
Ed. with Introduction etc. by Gopīnath Kaviraj, M.A. Rs. 1-8

No 7—( Part II ) Ditto Ditto Rs. 1-4

No. 8—The Kāvyaḍākinī (काव्यडाकिनी) [काव्यशास्त्र], by Gaṅgānanda Kavīndra.
Ed. with Introduction etc. by Jagannātha S'āstri Hoshing Sāhityopādhyāya. Rs. 0–10

No. 9—(Part I)–The Bhakti Chandrikā (भक्तिचन्द्रिका) [भक्ति], a Commentary on S'āṇḍilya's Bhaktisūtras, by Nārāyaṇa Tīrtha.
Ed. with a Prefatory Note by Gopinath Kaviraj, M.A. Rs. 0–15

No. 10–(Part I)–The Siddhāntaratna, (सिद्धान्तरत्न) [गौडीयवैष्णवदर्शन], by Baladeva Vidyābhūṣaṇa.
Ed. with a Prefatory Note by Gopinath Kaviraj, M.A. Rs. 1–2

No. 10–(Part II)—Do. Do. Rs. 2–12

No. 11–The S'rī Vidyā Ratna Sūtras, (श्रीविद्यारत्नसूत्र) [ तन्त्र ], by Gauḍapāda, with a Commentary by S'aṅkarāraṇya.
Ed. with Introduction etc. by Nārāyaṇa S'āstrī Khiste, Sāhityāchārya. Rs. 0–9

No. 12–The Rasapradīpa, (रसप्रदीप) [अलङ्कार], by Prabhākara Bhaṭṭa.
Ed. with Introduction etc. by Nārāyaṇa S'āstri Khiste Sāhityāchārya. Rs. 1–2

No. 13–The Siddhasiddhānta Saṅgraha, (सिद्धसिद्धान्तसंग्रह) [नाथमार्ग] by Balabhadra.
Ed, with Introduction by Gopinath Kaviraj, M. A. Rs. 0–14

No. 14–The Triveṇikā, ( त्रिवेणिका ) [अलङ्कार], by Āśādhara Bhaṭṭa.
Ed. with Introduction by Baṭukanātha S'armā Sāhityopādhyāya, M. A. and Jagannātha S'āstri Hoshing Sāhityopādhyāya. Rs. 0–14

No. 15–(Part I)–The Tripurārahasya, ( Jñāna Khaṇḍa) (त्रिपुरारहस्य, ज्ञानखण्ड) [तान्त्रिकदर्शन],
Ed. with a Prefatory Note by Gopinath Kaviraj, M.A Rs. 0–14

No. 15–( Part–II )—Do. Do. Rs. 2–4

No. 15–( Part III )—Do. Do. Rs. 2–0

No. 15–( Part IV )—Do. with Introduction, etc. by Gopinath Kaviraj, M. A.

No. 16–The Kāvya Vilāsa, (काव्यविलास) [अलङ्कार], by Chiranjīva Bhaṭṭāchārya.
Ed. with Introduction etc. by Baṭukanātha S'armā Sāhityopādhyāya, M. A. ānd Jagannātha S'āstri Hoshing Sāhityopādhyāya. Rs. 1–2

No. 17–The Nyāya Kalikā, (न्यायकलिका) [न्याय], by Bhaṭṭ Jayanta.
Ed. with Introduction by M. M. Gaṅgānātha Jhā, M. A. D. Litt. Rs. 0–14

No. 18–(Past I)–The Gorakṣa Siddhānta Saṅgraha. (गारक्षसिद्धान्त-संग्रह) [नाथमार्ग],
Ed. with a Prefatory Note by Gopinath Kaviraj, M. A., Rs. 0–14

No. 19–( Part. I )–The Prākṛita Prakāśa (प्राकृतप्रकाश) [प्राकृतव्याकरण]
by Vararuchi with the Prākṛita Sanjīvanī by Vasantarāja and the Subodhinī by Sadānanda.
Ed. with Prefatory note etc. by Batuk Nath S'armā, M. A. and Baladeva Upādhyāya, M. A. Rs 2–4

No. 19–( Part.II ) Ditto Ditto Rs. 2–12

No 19—( Part. III ) Introduction etc. ( In Preparation. )

No. 20–The Mānsatattvaviveka ( मांसतत्त्वविवेक ) [ धर्मशास्त्र ], by Viśvanātha Nyāyapanchānana Bhaṭṭāchārya.
Edited with Introduction etc. by Pandit Jagannātha Sāstri Hoshing Sāhityopādhyāya, with a Foreword by Pandit Gopi Nath Kavirāja, M. A., Principal, Government Sanskrit College, Benares. Rs. 0–12

No. 21–( Part I ) The Nyāya Siddhānta Mālā (न्यायसिद्धान्तमाला) [ न्याय ], by Jayarāma Nyāya Panchānana Bhaṭṭāchārya.
Edited with Introduction etc. by Dr. Mangal Deva Sāstrī, M. A., D. Phil. ( Oxon ), Librarian, Govt. Sanskrit Library, Sarasvati Bhavana, Benares. Rs. 1–4

No. 21–( Part–II ) Ditto Ditto Rs. 2–0

No. 22–The Dharmānubandhi Slokachaturdaśī ( धर्मानुबन्धिश्लोक-चतुर्दशी) [धर्मशास्त्र], by S'ri Seṣa Kṛṣṇa with a Commentary by Rāma Pandit.

Edited with Introduction etc. by Nārāyaṇa S'āstri Khiste Sāhityāchārya, Assistant Librarian, Government Sanskrit Library, Saraswati Bhavana, Benares. Rs. 1-0

No. 23-The Navarātrapradīpa (नवरात्रप्रदीप) [धर्मशास्त्र], by Nanda Pandit Dharmādhikārī.

Ed. with Introduction etc. by Vaijanātha S'āstrī Varakale, Dharmaśāstra-S'āstrī, Sādholāl Research Scholar, Sanskrit College, Benares, with a Foreword by Pândit Gopinath Kaviraj, M. A., Principal, Government Sanskrit College, Benares. Rs. 2-0

No. 24-The S'rī Rāmatāpinīyopaniṣad (रामतापिनीयोपनिषद्) [उपनिषद्], with the Commentary called Rāma Kāśikā in Pūrvatāpinī and Ānandanidhi in Uttaratāpinī by Ānandavana.

Ed. with Introduction etc. by Anantarāma S'āstrī Vetāla Sāhityopādhyāya, Post-Āchārya Scholar, Govt. Sanskrit College, Benares, with a Foreword by Pandit Gopī Nātha Kavirāja, M. A., Principal, Government Sanskrit College, Benares. Rs. 3-12

No. 25-The Sāpiṇḍyakalpalatikā ( सापिण्ड्यकल्पलतिका ) [ धर्मशास्त्र ], by Sadāśivadeva alias Āpadeva with a commentary by Nārāyaṇa Deva.

Edited with Introduction etc. by Jagannātha S'āstrī Hośiṅga, Sāhityopādhyāya, Sādholāl Research Scholar, Govt. Sanskrit College, Benares. Rs. 1-4.

No. 26-The Mṛgāṅkalekhā Nāṭikā ( मृगाङ्कलेखानाटिका ) [नाटिका], by Viśvanātha Deva Kavi.

Edited with Introduction etc. by Nārāyaṇa S'āstri Khiste Sāhityāchārya, Asst. Librarian, Government Sanskrit Library, Benares. Rs. 1-0

No. 27-The Vidvachcharita Pañchakam ( विद्वच्चरितपञ्चकम् ) [निबन्ध] By Nārāyana S'āstri Khiste, Sāhityacharya, Assistant Librarian, Govt. Sanskrit College, Sarasvati Bhavana Library, Benares. With an Introduction by Gopināth Kaviraja, MA, Principal, Govt. Sanskrit College, Benares. Rs. 2-0.

No. 28-The Vrata Kos'a (व्रतकोश) [धर्मशास्त्र], by Jagannātha S'āstri Hosiṅga Sāhityopādhyāya, late Sadholal Research Scholar, Sanskrit College, Benares With a Foreword by S'rī Gopinātha Kaviraja, M. A., Principal, Govt Sanskrit College, Benares. Rs. 4-0

No. 29-The Vṛitti dīpikā (वृत्तिदीपिका) [व्याकरण], By Mauni S'rī Kṛṣṇ Bhatta.
Edited with Introduction etc by Pt. Gangadhara S'astri Bhāradvāja, Professor, Govt. Sanskrit College, Benares. Rs. 1-2

No. 30-The Padārtha Maṇḍanam ( पदार्थमण्डन ) [ वैशेषिक ], By S'rī Veṇīdatta.
Edited with Introduction etc. by Pandit Gopāla S'āstri Nene, Professor, Govt. Sanskrit College, Benares. Rs. 0-14

No. 31-( Part I)-The Tantraratna ( तन्त्ररत्न ) [ मीमांसा ], by Pârth Sārathi Mis'ra.
Edited by M. M. Dr Ganganatha Jha, M. A, D. Litt, Vice-Chancellor, Allahabad University Allahabad. Rs. 114

No. 31-( Part II ) Ditto. Ditto.
Edited by Pt. Gopāl S'āstri Nene, Govt. Sanskrit College, Benares. Rs. 2-4

No. 32-The Tattvasāa ( तत्त्वसार ) [ न्याय ], by Rākhāldasa Nyāyaratna.
Edited with Introduction etc by. Harihara S'astri, Benares Hindu University. Rs. 1-0.

No. 33-( Part I ) The Nyaya Kaustubha ( न्यायकौस्तुभ ) [ न्याय ], by Mahadeva Puntamkar.
Edited with Introduction etc by Umes'a Mis'ra, M. A., Allahabad University, Allahabad. Rs. 3-4

No. 34-( Part I ) The Advaita Vidyātilakam ( अद्वैतविद्यातिलकम् ) [ शाङ्करवेदान्त ], by S'rī Samarapuṅgava Dikṣita.
With a Commentary by S'rī Dharmayya Dīkṣita.
Edited with Introduction, etc, by Ganapati Lal Jha, M. A., Sadholal Research Scholar, Govt. Sanskrit Library, Benares. Rs. 1-4

No. 35-The Dhama Vijaya Nāṭaka ( धर्मविजयनाटक ) [ नाटक ], by Bhūdeva S'ukla.

Edited with Introduction etc, by Pandit Nārāyaṇa S'āstri Khiste, Asst. Librarian, Govt. Sanskrit Library, Benares. Rs. 1-4

No. 36-The Ānanda Kanda Champū ( आनन्दकन्दचम्पू ) [ चम्पू ], by Mitra Miśra.
Edited, with a Foreword by Gopinath Kaviraj, M. A, by Nanda Kishore Sāhityāchārya, Research Scholar, Sanskrit College, Benares. Rs. 3-8

No. 37-The Upanidāna Sūtra ( उपनिदानसूत्रम् ) [ वेद ],
Edited with Introduction by Dr. Mangaldeva S'āstri, M. A., D. Phil. Rs. 1-0

No. 38-The Kiraṇāvali prakās'a dīdhiti ( Guṇa ), ( किरणावली-प्रकाशदीधिति ) [ वैशेषिक ], by Raghunāth S'iromani.
Edited by Pandit Badrināth Sāstri, M. A., Lucknow University Rs. 1-12

No. 39-The Rāma Vijaya Mahākāvya, ( रामविजयमहाकाव्य ) [ काव्य ] by Rupanātha.
Edited by Pt. Ganapatilal Jha, M. A. Rs. 2-0

No. 40-(Part I) The Kālatattva Vivechana (कालतत्त्वविवेचन) [धर्मशास्त्र], by Raghunātha Bhaṭṭa.
Edited with a Foreword by Gopinātha Kaviraja M.A by Nanda Kishore S'arma Sāhityāchārya, Research Scholar, Sanskrit College, Benares. Rs. 4-0

No. 40-( Part II ) Do Do Rs. 3-8

No. 41-(Part I) The Siddhānta Sārvabhauma (सिद्धान्तसार्वभौम) [ज्योतिष], by S'rī Munīśvara.
Edited with Introduction etc. by Jyautiṣâchārya Pandit Murlidhara Ṭhakkura, late Sadholal Scholar, Sanskrit College, Benares Rs 3-0

No. 42-The Bheda Siddhi (भेदसिद्धि) [न्याय], by Vis'vanātha Panchânana Bhaṭṭâchārya.
Edited with notes etc., by Nyāya Vyākaraṇāchārya Pandit Sûrya Nārāyaṇa S'ukla, Professor, Govt. Sanskrit College Benares. Rs. 1-12

No. 43–( Part I ) The Smārtollāsa ( स्मार्तोल्लास ) [ कर्मकाण्ड ],
by S'iva Prasāda.
Edited with Introduction, notes, etc, by Vedāchārya Pandit Bhagavat Prasad Miśra, Professor, Govt. Sanskrit College, Benares. Rs. 1–8

No. 44–( Part I ) S'ūdrāchāra S'iromani (शूद्राचारशिरोमणि) [धर्मशास्त्र],
Edited by Sāhityāchārya Pandit Narayan S'astri Khiste. Rs. 2–4

No. 45–( Part I ) Kiraṇāvalī Prakāśa (Guṇa) (किरणावली प्रकाश-गुण) [ वैशेषिक ], by Vardhamāna.
Edited, with a Foreword by Pt. Gopinath Kaviraj M., A., by Pandit Badrinath S'astri, M. A., Lucknow University. Rs. 1–8

No. 46–( Part I ) Kāvya prakāśa dīpikā (काव्यप्रकाशदीपिका) [अलङ्कार], by S'rī Chaṇḍī Dāsa.
Edited by S'ivaprasāda Bhaṭṭāchārya, M. A., Professor, Presidency College, Calcutta. Rs. 1–12

No. 47–Bhedajayaśrī ( भेदजयश्री ) [ माध्ववेदान्त ], by S'rī Tarkavāgīśa Bhaṭṭa Veṇīdattāchārya
Edited with Introduction etc, by Pandit Tribhuvan prasad Upādhyāya, M. A., Inspector of Sanskrit Pāṭhashalas, United Provinces, Benares. Rs. 1–4

No. 48–Samyak Sambuddha bhāṣitam Buddhapratimālakṣaṇam ( सम्यक्संबुद्धभाषितं प्रतिमालक्षणम् ) [ शिल्पशास्त्र ],
With the Commentary Sambuddhabhāṣita-pratimā lakṣaṇa Vivaraṇī. Critically edited with Introduction etc by Haridās, Mitra, M, A, Viśvabhārati, S'āntiniketana. Rs 1–4

No. 49–Bhedaratna ( भेदरत्न ) [ न्याय ] by Sankara Miśra'
Edited with Introduction etc, by Pandit Sūryanārāyaṇa S'ukla, Professor, Govt. Sanskrit College, Benares. Rs. 1–8

No. 50–Mātrikā Chakra Viveka ( मातृकाचक्रविवेक ) [ तन्त्र ], by Svatantrānanda Nātha, with a Commentary.
Edited by Pandit Lalita Prasad Dabral Vyākarnāchārya.

With a Foreword by Pt. Gopināth Kaviraj, M A., Principal Govt. Sanskrit College, Benares.

No. 51-52. Advaita Siddhānta Vidyotana (अद्वैतसिद्धान्तविद्योतन) [वेदान्त] by Brahmānanda Sarasvati

and

Nṛisiṃha Vijnāpana (नृसिंहविज्ञापन) [वेदान्त], by Nṛisiṃhāśrama. Edited with notes, Introduction etc. by Pandit Sūrya Nārāyaṇa S'ukla, Professor, Govt. Sanskrit College, Benares.

No. 53-Nṛisiṃha Prasāda-Vyavaharsāra (नृसिंहप्रसाद-व्यवहारसार) [धर्मशास्त्र], by Dalapati Rāja.

Edited with Introduction etc. by Pandit Vināyaka S'āstri Tillu, Research Scholar, Sanskrit College, Benares.

No. 54-Nṛisiṃha Prasāda-Prāyaśchitta Sāra (नृसिंहप्रसाद प्रायश्चित्तसार) [धर्मशास्त्र], by Sri Dalapati Rāja.

Edited by Pandit Nanda Kishore Sharma and Nanda Kumar Sharma Sahityacharya.

No. 55-Nṛisiṃha Prasâda-S'rādha Sāra (नृसिंहप्रसाद श्राद्धसार) [धर्मशास्त्र],

Edited by Pandit Vidyadhara Miśra, College of Oriental Learning, Benares Hindu University, Benares.

## Works in the press

No. 1. Dakṣiṇāmūrti Saṃhitā (दक्षिणामूर्तिसंहिता) [तन्त्र],

Edited by Pt. Nārāyna S'āstri Khiste.

No. 2. Ās'valāyana S'rauta Sūtra with Sidhhānti Bhāshya (सिद्धान्तिभाष्यसहित आश्वलायनश्रौतसूत्र) [वेद],

Edited by Dr. M. D. S'āstri, M. A., D. Phil.

No. 3. Nīti manjarī (नीतिमञ्जरी) [वेद], by Dyā Dvivedī.

Edited by D. Mangal deva Sastri. M. A., D. Phil.

No. 4. Nyāya Kaustubha ( Part II ) Anumānakhanda (न्यायकौस्तुभ-अनुमानखण्ड) [न्याय], by Mahādeva Puntamkar.

Edited by Pt. Goswami Dāmodara S'āstri.

No. 5. Mīmānsā Chandrikā ( मीमांसाचन्द्रिका ) [ मीमांसा ], by Brahmānanda Sarsvati.

Edited by Pt, Haran Chandra Bhaṭṭāchārya S'āstri.

No. 6. Ganita Kaumudī (गणित कौमुदी) [गणित], by Nārāyana Pandit

Edited by Pt. Padmakar Dvivedi.

No. 7. Kiranāvali prakāśa, (Part II) ( किरणावली प्रकाश ) [वैशेषिक], by Vardhamāna Upādhyāya.

Edited by Pt. Badrināth S'āstri, M. A.

No. 8. Tantraratna (Part III) (तन्त्ररत्न) [ मीमांसा ], by Partha Sārathi.

Edited by Pt. Gopal Sāstri Nene,

No. 9. S'ūdrāchāra S'iromani (Part II) (शूद्राचारशिरोमणि) [धर्मशास्त्र]. by S'eṣa Krṣṇa.

Edited by Pt. Nārāyana S'āstri Khiste.

No. 10. Kāvya prakāśa dīpikā ( Part II ) ( काव्यप्रकाशदीपिका ) [ अलङ्कार ], by S'ri Chandidāsa.

Edited by Pt. S'ivaprasāda Bhaṭṭāchārya, M. A.

No. 11. Smārtollasa (Pa:tII) (स्मार्तोल्लास) [कर्मकाण्ड], by Siva prasada.

Edited by P. Bhagavata prasād Miśra.

No. 12. Bhagavan nāma māhātmya Samgraha ( भगवन्नाममाहात्म्य-संग्रह ) [ भक्तिशास्त्र ], by Raghunāthendra Yati, with com. by Ananta S'āstri Phadke.

Edited by Pt. Ananta S'āstri Phadke.

No. 13. Kālatattvavivechna ( कालतत्त्वविवेचन ) [ धर्मशास्त्र ], by Ragunātha Bhaṭṭa. Part III.

Edited by Pt. Nanda kishore Sharma.

No. 14. Siddhānta Sārvabhauma ( सिद्धान्तसार्वभौम ) [ ज्यौतिष ], by Munīśvara. Part-II.

Edited by Pt. Murlidhar Thakkur.

## Works in the press.

No. 15. Upendra Vijnāna Sūtra ( उपेन्द्रविज्ञानसूत्र ) [ दर्शन ],
Edited by Dr. M. D. Shastri.

No. 16. Nyāyāmṛita Saurabha ( न्यायामृतसौरभ ) [ माध्ववेदान्त ], by Vanamāli.
Edited by Pt. Nrisimha Achārya.

No. 17. Vāsiṣṭha Darśana (वाशिष्ठदर्शन) [वेदान्त],
Edited by Dr. B. L. Atreya M.A., Ph. D. Professor, Benares Hindu University, Benares.

To be had of
The Superintendent
Government Press, U. P.,
Allahabad.

# THE PRINCESS OF WALES SARASVATI BHAVANA STUDIES:

Edited by

GOPINATH KAVIRAJ, M. A.

Vol. I—

(a) Studies in Hindu Law (1): its Evolution, by Gaṅgānātha Jhā.

(b) The View-point of Nyāya Vaiśeṣika Philosophy, by Gopi nath Kaviraj.

(c) Nirmāṇa Kāya, by Gopinath Kaviraj. Rs. 1-12

Vol. II—

(a) Paraśurāma Miśra alias Vāṇī Rasāla Rāya, by Gopinath Kaviraj.

(b) index to S'abara's Bhāṣya, by the late Col. G. A. Jacob.

(c) S'tudies in Hindu Law (2):—its sources, by Gaṅgānāth Jha

(d) A New Bhakti Sūtra, by Gopinath Kaviraj.

(e) The System of Chakras according to Gorakṣa nātha, by Gopinth Kaviraj.

(f) Theism in Ancient India, by Gopinath Kaviraj.

(g) Hindu Poetics, by Batuka nātha S'armā.

(h) A Seventeenth Century Astrolabe, by Padmākara Dvivedi.

(i) Some aspects of Vīra S'aiva Philosophy, by Gopinath Kaviraj.

(j) Nyāya Kusumāñjali (English Translation), by Gopinath Kaviraj.

(k) The Definition of Poetry, by Nārāyaṇa S'āstri Khiste.

(l) Sondala Upādhyāya, by Gopinath Kaviraj. Rs. 5

Vol. III—

(a) Index to S'abara's Bhāṣya, by the Late Col. G. A. Jacob.

(b) Studies in Hindu Law (3): Judicial Procedure: by Gangā-nātha Jha.

(c) Theism in Ancient India, by Gopintha Kaviraj.

(d) History and Bibliography of Nyāya Vaiśeṣika Literature, by Gopinath Kaviraj.

(e) Naiṣadha and S'rī Harṣa by Nilakamal Bhaṭṭāchārya.

(f) Indian Dramaturgy, by P. N. Pātankar. Rs 5.

Vol. IV—

(a) Studies in Hindu Law (4): Judicial Procedure: by Gaṅ nātha Jha.

(b) History and Bibliography of Nyāya Vaiśeṣika Literatu by Gopinath Kaviraj.

(c) Analysis of the Contents of the Ṛgveda-Prātiśākhya, Maṅgala Deva S'āstri.

(d) Nārāyaṇa's Gaṇita kaumudi, by Padmākara Dvivedi.

(e) Food and Drink in the Ramayanic Age, by Manmath natha Roy

(f) Satkāryavāda: Causality in Sāṅkhya, by Gopinatha Kaviraj

(g) Discipline by Consequences, by G. L. Sinha.

(h) History of the origin and expension of the Aryans, by A. C. Ganguly.

(i) Punishments in Ancient Indian Schools, by G.L. Sinha. Rs 5.

Vol. V—

(a) Ancient Home of the Aryans and their migration to India by A. C. Ganguly.

(b) A Satrap Coin, by Shyamalal Mehr.

(c) An Estimate of the Civilisation of the Vanaras as depicted in the Rāmayaṇa, by Manmatha nātha Roy.

(d) A Comparison of the Contents of the Ṛgveda, Vajasaneya, Tattirīya & Atharvaveda Prātiśākhyas, by Maṅgala Deva S'āstri.

(e) Formal Training and the Ancient Indian Thought, by G.L. Sinha.

(f) History and Bibliography of Nyāya Vais'eṣika Literature, by Gopinath Kavirāj.

(g) A Descriptive Index to the names in the Rāmāyaṇa, by Manmatha nātha Roy.

(h) Notes and Queries, (1) Virgin Worship, by Gopinath Kaviraj.

Vol. VI— Rs. 5

(a) Index to S'abara's Bhāṣya, by the late Col. G. A. Jacob.

(b) Some Aspects of the History and Doctrines of the Nāthās, by Gopinath Kaviraj.

(c) An Index etc. the Ramayana, by Manmatha nātha Roy.

(d) Studies in Hindu Law by M. M. Gaṅganatha Jha.

(e) The Mimamsa manuscripts in the Govt. Sanskrit Library (Benares), by Gopināthа Kavirāj.

(f) Notes and Queries, by Gopinātha Kavirāj.

Vol. VII.

(a) Bhāmaha and his Kāvyālaṅkār, by Baṭukanātha S'armā and Baladeva Upādhyāya.

(b) Some variants in the raeadings of the Vais'eṣika Sūtras, by Gopinātha Kavirāj.

(c) History and Bibliography of Nyâya Vais'eṣika Literature, by Gopinātha Kavirāj.

(d) An attempt to arrive at the correct meaning of some obscure Vedic words, by Sītāram Joshi.

(e) A comparison of the contents of the Rig Veda, Vajasaneya Taittiriya, and Atharva Veda (Chāturadhyāyika) Prātis'ākhyas, by Mangal Deva Shāstri.

(f) An Index to the Ramayaṇa, by Manmatha Nātha Roy.

(g) An Index to S'abrar's Bhāṣya, by the late Col. J. A. Jacob.

(h) Gleanings from the Tantras, by Gopinātha Kavirāj.

(i) The date of Madhusudana Saraswati, by Gopinātha Kavirāj.

(j) Descriptive notes on Sanskrit Manuscripts, by Gopinātha Kavirāj.

(k) A note on the meaning of the word Parārdha, by Umes'a Mis'ra. Rs. 5

Vol. VIII.

(a) Indian Philosophy, by Tarakanatha Sanyal.

(b) An Index to the Rāmāyaṇa, by Manmatha Nath Roy.

(c) Index to S abara's Bhāṣya, by the late Col. J. A. Jacob.

(d) Hari Svāmi, the commentator of S'atapatha Brāhmana and the date of Skanda Svami the commentator of the Ṛigveda, by Mangaladeva S'âstri.

(e) Mysticism in Veda, by Gopināth Kaviraj.

(f) The Deva dāsī: a brief history of the Institution, by Manmath Nātha Roy. Rs. 5

Vol. IX (In progress)

(a) The Life of a Yogin, by Gopinātha Kavirāj.

## THE PRINCESS OF WALES SARASVATI BHAVANA STUDIES

( SANSKRIT )

## SARASVATALOKA

Edited by

GOPINATH KAVIRAJ, M. A

Kirana 1 ( In progress )

(a) Mangalam, etc, by Nārāyaṇa S'āstri Khiste.

(b) Mimansaka mata saṃgraha, by Haranchandra Bhaṭṭāchary

(c) S'rimad Āchārya Mandana Mis'ra by Chinna Swami S'astri

(d) Bhagavato Buddhasya Charitam Upades'as'cha, by Gopinatha Kaviraj.

Kirana I ( Supplement )

Sanskrita Kavi Parichaya-(Bharavi) by Nanda Kishore Sharm

Kirana II ( In progress )

(a) S'āradā Prasādanam by Nārâyāna S'āstri Khiste.

(b) Chūḍāmani Dars'anam by S'as'adhara Tarkachūḍāmaṇi.



To be had of

The Superintendent

Government Press, U. P.,

Allahabad